स्वं रूपं दर्शयामास
वज्री देवः शतक्रतुः ।
तरुणादित्यसंकाशं
. स्तूयमानं मरुद्गणैः ॥ १८ ॥

प्रत्यग्रार्कभास्वरं देवैर्गणैश्च स्तूयमानमात्मीयं रूपं वज्रपाणिर्देवः शतक्रतुः प्रकटीचकार । तेजोतिशययोगस्य हेतुतया शतक्रतुर्वज्रीति च विशेषणद्वयम् । कुलिशस्य स्वभाव एवायं यदद्भुतप्रभाभास्वरत्वं, शतक्रतुत्वाच्च तज्जनितपुण्यप्रभावादद्भुतभूरिमहःसमूहत्वमिति ॥ १८ ॥

ते तमृग्भिर्यजुर्भिश्च
सामभिश्चास्तुवन्नताः ।
सोऽब्रवीदुच्यतां कामो
जगत्सु प्रवरोऽपि यः ॥ १९ ॥

ते वव्रिरे शिवज्ञानं
श्रूयतामिति सोऽब्रवीत् ।

किंत्वेकोऽस्तु मम प्रष्टा
निखिलश्रोतृसंमतः ॥२०॥

ते भरद्वाजादयस्तं प्रत्यक्षीकृतस्वस्वरूपमिन्द्रं ऋग्यजुःसामभिः प्रह्वाः सन्तस्तुष्टुवुः । स च सर्वजगत्प्रवरो वरो भवद्भिरभ्यर्थ्यतामिति तानाह । ते तदैवमुक्ताः पारमेश्वरं ज्ञानं शास्त्रं वृतवन्तः । स तु तदभ्यर्थितं ज्ञानोपदेशं दातुं तान् प्रतिवचनं श्रूयतामित्याह, किंतु ममैक एव भवतां मध्यात् सकलश्रोतृजनाभिमतो यथावसरमनुक्तवस्तुनः प्रष्टा भवतु, सर्वैश्चैव भवद्भिः श्रूयतामिति ॥ २० ॥

एवं भगवता शक्रेणोक्ते सति

अथ तेषां भरद्वाजो
भगवानग्रणीरभूत् ।
वाग्मी प्रगल्भः पप्रच्छ
न्यायतः सुरपूजितम् ॥ २१ ॥

अथानन्तरं, तेषां मध्यादैश्वर्यादिगुणयोगात् भगवान् विविधशास्त्राभ्यासाधिवासप्रश-

स्ववाग्युक्तत्वाच्च वाग्मी, प्रष्टव्यावसरेषु अकौशलाप्रतिपत्त्याद्ययोगात् प्रगल्भश्च भरद्वाजो मुनिर्न्यायत इति न्यायेन शिष्योचितया नीत्या युक्त्युपपन्नपूर्वपक्षकरणेन वा इन्द्रमपृच्छदिति ॥ २१ ॥

आह

कथं महेश्वरादेत-
दागतं ज्ञानमुत्तमम् ।
किं च चेतसि संस्थाप्य
निर्ममे भगवानिदम् ॥ २२ ॥

यदेतद्भगवता अस्मभ्यमुपदेष्टुमारब्धमितरेभ्यो ज्ञानेभ्यः सातिशयफलत्वाच्छ्रेष्ठतमं ज्ञानं, तत्कथं महेश्वरात् प्रशान्तस्वरूपान्निष्कलाच्छिवात्प्रसृतम् । ज्ञानं[1] हि द्विरूपमवबोधरूपं शब्दरूपं च । तदवबोधरूपं शब्दरूपारूढं सर्वेषु प्रवर्तते । तत्रादितः परमेश्वरादवबोधरूपमेव तावत्कथं प्राप्तं, कथंच शब्दरू-

१ ज्ञायतेऽनेनेति ज्ञानं शास्त्रं शब्दसमुदाय इति यावत् ।

पतामेत्य बहुभेदभिन्नं संपन्नम् । किंचाकलय्य[1], भगवानिदमकरोत् । नह्यनभिसंहितप्रयोजनः[2] कश्चित्कर्ता किंचित्कार्यं कुर्वन् दृष्टः । तस्य च भगवत एतत्करणे किं कारणमित्यर्थः ॥ २२ ॥

अथात्र प्रतिवचनम्

सृष्टिकाले महेशानः
पुरुषार्थप्रसिद्धये ।
विधत्ते विमलं ज्ञानं
पञ्चस्रोतोऽभिलक्षितम् ॥ २३ ॥

सर्गप्रारम्भे परमेश्वरेण पुरुषार्थस्य भुक्ति-मुक्त्यात्मनः संपत्त्यर्थं विमलमित्यवबोधात्मनो नादरूपत्वेन प्रथमं प्रसृतत्वादगृहीतोपाधि-भेदं, परतस्तूर्ध्वप्राग्दक्षिणपश्चिमोत्तरस्रोतःप-ञ्चकेनाभितः समन्तात्प्रसृतत्वेन लक्षितमिति सदाशिवरूपेण दर्शनात्मतां प्रापितं, ज्ञानं नि-र्मितमिति क्रमः । प्रयोजनं च पूर्वप्रश्नि-तमुपवर्णितम् ॥ २३ ॥

१ आकलय्य विचार्य । २ निष्प्रयोजनः ।

किंच

तद्वर्तिवाचकव्रात-
वाच्यानष्टौ महेश्वरान् ।
सप्तकोटिप्रसंख्याता-
न्मन्त्रांश्च परमेऽध्वनि ॥ २४ ॥

मन्त्रोद्धारप्रकरणाभिधास्यमानज्ञानमध्यवर्तिनो वाचकव्रातस्य मन्त्रगणस्य ये वाच्या अनन्तादयोऽष्टौ विद्येशास्तांस्तथा मायीयस्याशुद्धस्याध्वनस्तत्कालमनाविर्भावाच्छुद्धविद्याभुवने कृतस्थितीन् सप्तकोटिसंख्यातान् मन्त्रान् परमेश्वरो विधत्त इति पूर्वेण संबन्धः । कालसामान्येऽपि प्रथमलकारस्य स्पष्टत्वात् सृष्टिकाले व्यधादित्यर्थः, प्रतिसर्गकालं वा तथा करोतीति वर्तमानतैव । तत्र विद्येश्वराणां वामादिशक्तियोगित्वेन स्वसमप्रभावाविर्भावनं नाम करणं, मन्त्राणां त्वागमापगमात् प्रकटीकृतदृक्क्रियत्वम् । उभयेषामप्येषां परमेश्वराज्ज्ञानक्रियाशक्त्योरुद्दीपनं ज्ञेयम्, न पुनर्मुक्ताणुवन्निर्मलीक-

रणमधिकारमलेनापरत्वान्मुक्तेरस्या इति व-
क्ष्यामः ॥ २४ ॥

तदेवं मन्त्रमहेश्वरान्मन्त्रांश्चोक्त्वा, मन्त्रेश्वरा-
न्वक्तुमाह

अष्टादशाधिकं चान्य-
च्छतं मायाधिकारिणाम् ।
मन्त्रेश्वराणामूर्ध्वाध्व-
स्थितेशोपमतेजसाम् ॥ २५ ॥

मायायामधिकारिणो मायाधिकारिणस्तेषा-
मुपरितनशुद्धाध्ववर्तिविद्येश्वरसमानधाम्नाम-
ष्टादशाधिकं शतं विधत्त इति पूर्वेणैव संबन्धः।
तत्र मण्डलिनोऽष्टौ वक्ष्यमाणाः, क्रोधाद्या-
श्चाष्टावेव, रुद्राणां च ब्रह्माण्डधारकाणां शतं,
श्रीकण्ठवीरभद्रौ चेत्येवमष्टादशोत्तरं शतं प्रा-
ग्वन्मन्त्रेश्वरत्वे शिवेन नियुक्तमित्यर्थः ॥ २५ ॥

तेषु व्यक्तः स भगवा-
निदं योग्येषु सिद्धये ।
प्रकाशयत्यतोऽन्येषु
योऽर्थः समुपपद्यते ॥ २६ ॥

तेष्वनन्तादिषु मन्त्रमहेश्वरेषु, मण्डल्यादिषु च मन्त्रेश्वरेष्वभिव्यक्तो देव इदमित्यनन्तरोपक्रान्तं ज्ञानं प्रकाशयति । कस्मिन्विषये, किमर्थं प्रकाशयतीत्याह योग्येषु सिद्धये परिपक्वाञ्जनत्वान्निरतिशयश्रेयःप्रेप्सुषु भुक्त्यर्थं मुक्त्यर्थं च वक्तीत्यर्थः । अतोऽन्येष्विति एतच्छास्त्राहेंभ्यो येऽन्ये अपरिपक्वाञ्जनतया पशुशास्त्रानुवर्तिनस्तेषु विषयेषु यः कापिलपाञ्चरात्रादिप्राप्योऽर्थः सम्यगिति तदुक्तयोग्यतानुसारेणोपपद्यते अनुगुणो भवति, तं प्रकाशयति । पशुशास्त्रप्रणेतृनधिष्ठाय तत्तच्छास्त्रप्रकाशनमपि पारम्पर्येण कुरुत इति यावत् ॥ २६ ॥

अथास्य ज्ञानस्यास्मभ्यमभिधीयमानस्य किमभिधानमित्याह

शिवोद्गीर्णमिदं ज्ञानं
मन्त्रमन्त्रेश्वरेश्वरैः ।
कामदत्वात्कामिकेति
प्रगीतं बहुविस्तरम् ॥ २७ ॥

परमेश्वरात्प्रोक्तेन क्रमेण प्रसृतमेतज्ज्ञानं शास्त्रं स्कन्दस्य देव्यास्तदन्येषां च पृथक् पृथक् श्रोतॄणां बहुत्वाद्बहुभेदत्वेन विस्तरमभिमतकामदत्वात् कामिकत्वेनोपदेष्टृभिर्मन्त्राणां मन्त्रेश्वराणां चेश्वरैर्मन्त्रमहेश्वरैरनन्तादिभिरुपदिष्टम् ॥ २७ ॥

तेभ्य आगमय्य कस्मै कियता ग्रन्थेन को दत्तवानित्याह

तेभ्योऽवगत्य दृग्ज्योति-
ज्वालालीढस्मरद्रुमः ।
ददावुमापतिर्मह्यं
सहस्रैर्भवसंमितैः ॥ २८ ॥

तेभ्योऽनन्तेशादिभ्यस्तृतीयनेत्राग्निशिखानिर्दग्धस्मरतरुर्भगवानुमापतिरधिगम्य भवसंख्यैरेकादशभिः सहस्रैः संक्षिप्य मह्यमदात् ॥

सोऽहमिदानीं

तत्रापि विस्तरं हित्वा
सूत्रैः सारार्थवाचकैः ।

वक्ष्ये निराकुलं ज्ञानं
तदुक्तैरेव भूयसा ॥ २९ ॥

तत्रापि अर्थवादानुवादरूपं विस्तरं त्यक्त्वा, सारार्थाभिधायिभिर्बाहुल्येन क्वचित्तदुक्तैः, क्वचिच्चात्मीयैर्निराकुलं क्रमं ज्ञानं शास्त्रमभिधास्ये इतीन्द्रो मुनीनाहेति हारीतः स्वशिष्यान् ब्रूते ॥ २९ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठकृतौ मृगेन्द्र-
टीकायामुपोद्घातप्रकरणं प्रथमम् ॥ १ ॥



अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

### ( द्वितीयः पटलः )

अथानादिमलापेतः
सर्वकृत्सर्वविच्छिवः ।
पूर्वंव्यत्यासितस्याणोः
पाशजालमपोहति ॥ १ ॥

संबन्धाभिधेयप्रयोजनानि प्रथममेव विवेचितानि । अथेत्यानुषङ्गिकसंबन्धादिकथनादनन्तरं विद्याख्यः पादः प्रक्रम्यते । अत्र च शास्त्रे पतिपशुपाशाख्यास्त्रयः पदार्थाः । पशूनामस्वातन्त्र्यात् पाशानामाचैतन्यात् तद्विलक्षणस्य पत्युः [१]पञ्चविधकृत्यकारित्वम्, तत्कारकाणि स्वशक्तिरूपाणि मायादीनि च, क्रिया च दीक्षाख्या, तत्फलं च पशूनामनुग्रहाख्येन कर्मणा परकैवल्यासादनमित्यादि अभिधास्यमानम् । तद्गर्भीकारेणेदं मूलसूत्रम् । अनादिमलापेत इति । अनादिशब्दः क्रियाविशेषणम् । अनादि

१ सृष्टिस्थितिसंहाराविर्भावतिरोभावात्मकं पञ्चविधं कृत्यम् ।

कृत्वा मलापेतः स्वभावनिर्मलः परमेश्वरः[1], तथा अनादिश्चासौ मलापेतश्च तत्प्रसादात्[2] प्रध्वस्तसमस्तमलो मुक्ताणुवर्गः, किंच अनादेर्मलादपेतः स्वाभाविकमलविदारणात् परमेश्वरेण प्रकटीकृतदृक्क्रियः[3] किंचिदवशेषितत्वादादिमता अधिकारमलेन युक्तो मन्त्रमन्त्रेश्वरमन्त्रमहेश्वरवर्ग इत्येवं समासत्रयकरणात् मुक्ताणुभिर्विद्येश्वरादिभिश्च सहितः पतिपदार्थः अत्र सूचितः । तस्य च त्रिविधस्यापि सर्वज्ञता सर्वकर्तृत्वं च विद्यते, मुक्तात्मनां तु सत्यपि सर्वार्थदृक्क्रियत्वे पाशजालापोहनसामर्थ्यमस्ति, नत्वपोहनकर्तृत्वम् । यतस्ते करणीयस्याभावात् न प्रवर्तन्ते, अतः स्वात्मन्येव श्रेयोयोगाच्छिवत्वमेतेषां, विद्येश्वराणां शिवपदप्राप्तिहेतुत्वात्, भगवतस्तु सर्वानुग्रहप्रवृत्तत्वात् । तथाच मुक्तात्मनामप्रवृत्तत्वात् विद्येश्वराणां च परमेश्वरपारतन्त्र्यात् स्वतन्त्रः स भगवान् । किं करोतीत्याह पूर्वंव्यत्यासितस्याणोः

---

१ परमेश्वरः पतिः । २ अनादिरपि मुक्ताणुवर्गः ईश्वरप्रसादात् प्रध्वस्तसमस्तमलः अधिकारमलरहितः । ३ प्रकटीकृते दृक्क्रिये यस्य सः, यस्य परमेश्वरेण दृक्शक्तिः क्रियाशक्तिश्च प्रकटीकृते ।

पाशजालं व्यपोहतीति अणोरिति विज्ञाना-कलप्रलयाकलसकलत्वेन त्रिरूपस्य, तथा वि-ज्ञानाकलप्रलयाकलात्मनोर्विपर्यवसितमलेश्व-रशक्त्यधिकारतदन्यथाभावभेदात् प्रत्येकं द्वि-विधयोः, सकलस्यापि त्रिबन्धनबद्धस्य, कुत-श्चिदुपायात्प्रक्षीणकर्मतया केवलकलादियु-क्तस्य च, एवं द्विप्रकारस्यास्यैव च प्रत्येकं विदेहसदेहभेदात् प्रतिभेदं च मलाद्यधिकार-विरहिणस्तद्युक्तस्य चेत्यष्टप्रकारस्य, इत्थमनेक-भेदभिन्नस्यात्मनः परमेश्वरः पाशजालं यथा-संभवमपोहतीति संबन्धः । यस्य च यथा

---

१ विपर्यवसितो मलो यया सा विपर्यवसितमला नाशितमलेति यावत्, तादृशी या ईश्वरशक्तिस्तया कृताधिकारः, तया अकृताधिकारश्च, ताभ्यां भे-दाभ्यां भिन्नौ विज्ञानाकलप्रलयाकलौ । ईश्वरशक्तिनाशितमलः सन् ईश्वरशक्ति-दत्ताधिकारवान् विज्ञानाकलः प्रथमः । ईश्वरशक्तिनाशितमलः सन् ईश्वर-शक्तिदत्ताधिकाररहितः विज्ञानाकलो द्वितीयः । एवमीश्वरशक्तिनाशितमलः सन् ईश्वरशक्तिदत्ताधिकारवान् प्रलयाकलः प्रथमः, ईश्वरशक्तिनाशितमलः सन् ईश्वरशक्तिदत्ताधिकाररहितः प्रलयाकलो द्वितीयः ।

२ त्रिविधबन्धनबद्धो विदेहसकलः १ उपायात्प्रक्षीणकर्मा केवलकलादि-युक्तो विदेहसकलः २ त्रिविधबन्धनबद्धः सदेहसकलः ३ उपायात्प्रक्षीण-कर्मा केवलकलादियुक्तः सदेहसकलः ४ त्रिविधबन्धनबद्धविदेहो मला-द्यधिकारयुक्तः सकलः ५ उपायात्प्रक्षीणकर्मा केवलकलादियुक्तविदेहो मलाद्यधिकाररहितः सकलः ६ त्रिविधबन्धनबद्धविदेहो मलाद्यधिकार-रहितः सकलः ७ उपायात्प्रक्षीणकर्मा केवलकलादियुक्तविदेहो मलाद्यधि-काररहितः सकलः ८ इत्यष्ट भेदाः ।

चापोहति, तत्सर्वं यथावसरमग्रे वक्ष्यामः । कीदृशस्याणोरित्याह पूर्वव्यत्यासितस्येति पूर्वैरनादिकालीनैर्मलकर्ममायापरमेश्वरनिरोधशक्त्याख्यैर्यथासंभवं हेतुतया स्थितैर्व्यत्यासितस्य परमेश्वराद्वैसादृश्यं प्रापितस्य तत्प्रेर्यस्य बन्धान्तरयोगिनश्च । अयमर्थः—मलेनेश्वरनिरोधशक्त्या कर्मभिश्च सद्भिरणोरशिवत्वं, ततश्च बन्धान्तरयोगः, तदपोहने तु शिवत्वम् । एवं च शिववैसादृश्ये त एवानादयो हेतवः । शिवस्त्वप्रतिबद्धनिरतिशयसर्वार्थदृक्क्रियाशक्तिः तेषां योग्यतामपेक्ष्य अनुग्रहे प्रवृत्तः पाशव्रातमपोहति निरस्यति । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इत्यपोहतिपदम् । तदेवमखिलतन्त्रार्थसूचनादेतन्मूलसूत्रम् । तथाचेहैव व्याख्यानावसरे वक्ष्यति

> 'यत्र बीज इवारूढो महातन्त्रार्थपादपः ।
> आभाति मूलसूत्रं तदथशब्दाद्यलङ्कृतम् ।'[1]

इति ॥ १ ॥

---

१ अथानादिमलापेत इति पूर्वप्रोक्तश्लोकात्मकं मूलसूत्रम्, तदात्मकं बीजम् । तदन्यत् सर्वश्लोकात्मको महातन्त्रात्मकः पादपः ।

अथैतत्सूचितार्थप्रकाशनार्थमुत्तरसूत्रं

त्रिपदार्थं चतुष्पादं
महातन्त्रं जगत्पतिः ।
सूत्रेणैकेन संहृत्य
प्राह विस्तरशः पुनः ॥ २ ॥

पाशसद्भावे ह्यात्मनां[1] जन्मस्थितिध्वंसतिरोभावानुग्रहकृत् भगवान् भवतीति पतिपशुपाशात्मव्यतिरिक्तं न किंचित्पदार्थान्तरं प्रयोजनवदेष्वेवान्येषामन्तर्भावादिति त्रिपदार्थत्वमुक्तम् । किंच पाशजालमपोहतीत्यपोहतिक्रियाक्षिप्ताः क्रियाचर्यायोगपादाः, पतिपशुपाशोक्त्याक्षिप्तश्च विद्यापाद इति पादचतुष्टयोपक्षेपः कृतः । महातन्त्रमिति दर्शनान्तरेभ्योऽधिकफलत्वाच्छिवभेदकत्वेन परत्वाद्वा महत् तन्त्रिततत्त्वप्रमेयत्वाच्च तन्त्रम् । एकेनैवामुना सूत्रेण संहृत्य संगृह्य पुनर्विस्तरेणैतदेव प्रमेयं जगत्पतिः श्रीकण्ठनाथः प्राह ॥ २ ॥

---

१ पशूनाम् ।

मूलसूत्रात्सर्वकृत्सर्वविदिति विशेषणद्वयं व्याचष्टे

जगज्जन्मस्थितिध्वंस-
तिरोभावविमुक्तयः ।
कृत्यं सकारकफलं
ज्ञेयमस्यैतदेव हि ॥ ३ ॥
तेन स्वभावसिद्धेन
भवितव्यं जगत्कृता ।
अर्वाक्सिद्धेऽनवस्था स्या-
न्मोक्षो निर्हेतुकोऽपिवा ॥ ४ ॥

जगतो जन्मवज्जन्तुचक्रस्य भोगोपयोगि[1]परिकरसहितस्य, पौनःपुन्येन तत्तद्विविधयोनिषु उद्भावनं[2] जन्म, स्थितिस्तदिच्छानिरुद्धस्य सर्वलोकस्य स्वगोचरे[3] नियोगः स्थापनं, ध्वंस[4] आदानं जगद्योनावुपसंहारः, तिरोभावो[5] यथानुरूपाद्भोगादप्रच्यावः संरक्षणाख्ययान्यत्रोक्तः । यदाह वार्तिककारः

१ भोगानुकूलकारकसहितस्य । २ सर्जनम् । ३ स्वर्गनरकादौ नियोजनम् । ४ मायाख्ये एकत्रिंशत्तमे तत्त्वे जगद्योन्याख्ये । ५ आत्मनस्तिरोभावो नाम स्वकीयकर्मानुगुणभोगादप्रच्यावोऽदूरीकरणम् ।

'स्वसंस्कारोचिताद्भोगादप्रच्यावः शरीरिणाम् ।
प्रोक्तं संरक्षणं नाम न्यायेन परिकल्पनम् ॥'

इति । विमुक्तिशब्देनात्रानुध्यानरूपोऽनुग्रह इत्येतत्परमेश्वरस्य संबन्धि पञ्चविधं कृत्यं, कारकैः शक्त्यादिभिः, फलेन च भुक्तिमुक्त्यात्मना सहितं ज्ञेयमवबोद्धव्यम् । एतच्च न मायादिभिः कर्मभिर्वा निर्वर्तयितुं शक्यमाचैतन्यात्, नापि पुरुषेणास्य मलनिरुद्धशक्तित्वात् । न चानीश्वरोऽत्र कर्ता युक्तः । यश्चैतत्स्रष्ट्यादि कर्तुं शक्नोति, सोऽवश्यं तद्विषयज्ञः चिकीर्षितकार्यविषयाणां ज्ञानविशेषाणामंशेनापि वैकल्ये तत्तत्कार्यानिष्पत्तेः । अतश्च सर्वकर्त्रा सर्वज्ञेन तेन च स्वभावसिद्धेन जगतः कर्त्रा भवितव्यम् । अर्वागिति आदिमत्त्वेन सिद्धे तस्मिन्नभ्युपगम्यमाने यदि कारणात् कुतश्चित्तस्यासावनुग्रहस्तस्यापि कारणं, तत्कारणस्यापि कारणान्तरं मृग्यमित्यनवस्था । अथास्य विनैव कारणं स्वत एव तथाविधमैश्वर्यं तदकस्माज्जातं, तर्ह्येष निर्हेतुको मोक्षोऽन्यानपेक्षणात् सर्वस्यैव स्यात्, तस्यापि वा न स्यात् । यदाहुः

'नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः ॥'

इति । तस्मात्स्वभावसिद्धनित्यनिरतिशयनिर्मलसर्वार्थदृक्क्रियः पतिपदार्थः पूर्वमुद्दिष्टोऽनेन लक्षितः परीक्ष्यते पुरस्तात् ॥ ३, ४ ॥

इदानीं पशुपदार्थं लक्षयितुमाह

चैतन्यं दृक्क्रियारूपं
तदस्त्यात्मनि सर्वदा ।
सर्वतश्च यतो मुक्तौ
श्रूयते सर्वतोमुखम् ॥ ५ ॥

सदप्यभासमानत्वा-
त्तन्निरुद्धं प्रतीयते ।
वश्योऽनावृतवीर्यस्य
सोऽत एवाविमोक्षणात् ॥ ६ ॥

ज्ञानक्रियात्मकं यच्चैतन्यं, [1]तदात्मन्यस्ति, नतु शरीरसमवेतमिति चार्वाकनिराकरणे वक्ष्यामः । तच्च सर्वदैवास्ति, नतु मुक्तावेव,

---

१ यथा एकस्मिन्नपि दीपे प्रकाशकत्वं दाहकत्वं, तथा एकस्यामपि चिच्छक्तौ ज्ञानजनकत्वेन दृक्शक्तित्वं, कार्यजनकत्वेन क्रियाशक्तित्वम् ।

मुक्तौ तु संवित्त्यभावो यथा वैशेषिकैरिष्टः तथाविधाया मोहरूपाया मुक्तेर्निराकरिष्यमाणत्वात् । तच्चात्मनश्चैतन्यं ज्ञानक्रियात्मकं सर्वतोमुखमस्ति, नतु क्षपणकानामिव देहप्रमाणकत्वनियमादव्यापि पशुपदार्थप्रकरणे व्यापकत्वस्य वक्ष्यमाणत्वात् । अत्र हेतुमाह यतो मुक्तौ श्रूयते सर्वतोमुखं, मुक्तात्मनां सर्वतोमुखस्य चैतन्यस्य श्रवणादित्यर्थः। नच[1] तेषां तदानीमेव तदुत्पद्यते इति वाच्यं, सदुत्पत्तेः सत्कार्यवादप्रकरणेऽभिधास्यमानत्वात् । अथ मुक्तावेव तथाविधचैतन्यश्रुतेः, पूर्वं च तदनुपलम्भादन्वय[2]व्यतिरेकाभ्यां संसारावस्थायां सर्वतोमुखत्वं चैतन्यस्य कुत इत्याशङ्कानिरासायाह सदप्यभासमानत्वादित्यादि । सत्यमनुपलम्भः संसारावस्थायां तथाविधस्य चैतन्यस्य। स त्वन्यथासिद्धः । व्यञ्जकाभावकृतो हि योऽनुपलम्भः स नाभावसाधकः, अपितु असति व्यञ्जके यश्चायमनुपलम्भः स व्यञ्ज-

---

१ असदुत्पत्तिमाशङ्क्य आह नचेति । २ मुक्तिसत्त्वे सर्वतोमुखचैतन्यसत्त्वम् । मुक्त्यभावे सर्वतोमुखचैतन्याभावः ।

काभावकृतः अतश्च नासत्त्वं साधयति । तच्च सर्वतोमुखत्वं सदपि यस्मान्न प्रथते, ततः केनापि प्रतिबद्धमित्यवसीयते। अस्माच्च हेतो-रनावृतनिजसामर्थ्यस्य मुक्तेः पुरा स आत्मा वश्य इति ॥ ५, ६ ॥

एवं द्वितीयं पदार्थमभिधाय, तृतीयपदार्थं लक्षयितुमाह

प्रावृतीशबले कर्म
मायाकार्यं चतुर्विधम् ।
पाशजालं समासेन
धर्मा नाम्नैव कीर्तिताः ॥ ७ ॥

प्रावृणोति प्रकर्षेणाच्छादयति आत्मनां दृक्क्रिये इति प्रावृतिः स्वाभाविक्यशुद्धिर्मल इत्यर्थः । ईष्टे स्वातन्त्र्येणेतीशः तदीयं बलं रोधशक्तिर्द्वितीयः पाशः । तथा ह्यग्रे वक्ष्यति

'तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा ।
धर्मानुबर्तनादेव पाश इत्युपचर्यते ॥' (७ पट० )

इति । क्रियते तत्तत्फलार्थिभिरिति कर्म, तस्य चानादित्वमाद्यकोटेरनुपलभ्यमानत्वात्, यतः

शरीरवतः कर्म करणं, तच्च शरीरं कर्मारब्धं, तान्यपि शरीरान्तरेण कृतानि, तच्च कर्मजमिति सोऽयं तृतीयः पाशः । मात्यस्यां शक्त्यात्मना प्रलये सर्वं जगत् सृष्टौ व्यक्तिं यातीति माया । यथोक्तं श्रीमत्सौरभेये

'शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये ।
विकृतौ व्यक्तिमायान्ति············॥'

इति । स्वकार्येण कलादिना सहितेयमप्यनादिकालीना चतुर्थः पाश इति । एतदात्मनां सहजसामर्थ्यप्रतिबन्धकत्वात् पाशानां जालमिव जालं समासतः संक्षेपादुक्तम् । येषां च ये धर्मा व्यापारास्ते नाम्नैव प्रदर्शिताः अन्वर्थेन स्वाभिधानेन सूचितास्तथापि यथावसरं वक्ष्यन्ते ॥ ७ ॥

अथ पदार्थत्रयोपसंहारः

इति वस्तुत्रयस्यास्य
प्राक्पादकृतसंस्थितेः ।
चर्यायोगक्रियापादै-
र्विनियोगोऽभिधास्यते ॥ ८ ॥

इत्थमस्यैव पदार्थत्रयस्य विद्यापादे स्थितस्य चर्यादिपादत्रयेण विनियोगो विभजनमभिधास्यते वक्ष्यते। एवंविधेन विधिना पतिः पाशोपशमनं कृत्वा पशूनां कैवल्यदो भवति आत्मनामिति प्रतिपदमेषामेव प्रविवेकोऽभिधास्यत इत्यर्थः ॥ ८ ॥

तत्फलकथनायाह

विनियोगफलं मुक्ति-
भुंक्तिरप्यनुषङ्गतः ।
परापरविभागेन
भिद्येते ते त्वनेकधा ॥ ९ ॥

तस्य च विनियोगस्य विभजनस्य मुक्तिः फलं, अनुषङ्गतः अनुनिष्पन्नतया भुक्तिरपि वक्ष्यमाणा भौतिकदीक्षादिभिः समभिलषितभोगोपभोगात् परतः परकैवल्याविर्भावः। तथा चोक्तं रुरुसंहितायां

'दीक्षापूता गणपतिगुरोर्मण्डले जन्मवन्तः
सिद्धा मन्त्रैस्तरुणदिनकृन्मण्डलोद्भासिदेहाः ।
भुक्त्वा भोगान् सुचिरममरस्त्रीनिकायैरुपेताः
स्रस्तोत्कण्ठाः शिवपदपरैश्वर्यभाजो भवन्ति ॥'

इति । तेन भुक्तिमुक्ती परापरविभागेन ब-
हुधा भिद्येते। तत्र परा भुक्तिः पातालादिकला-
न्ताध्ववर्तिविचित्रैश्वर्यसंपन्नतत्तद्भुवनाधिपत्यं,
तत्तद्भुवनवासित्वमात्रं चापरा। एवं परा मुक्तिः
परमेश्वरसाम्यम्, अपरा तु मन्त्रमन्त्रेश्वरत्वम्।
आसां च यथा बहुभेदत्वं, तथाग्रे वक्ष्यामः॥९॥

अथान्येभ्यो दर्शनेभ्यः कोऽस्य पारमेश्व-
रस्य ज्ञानस्य विशेष इति मुनिः प्रष्टुमाह

वेदान्तसांख्यसदस-
त्पादार्थिकमतादिषु ।
ससाधना मुक्तिरस्ति
को विशेषः शिवागमे ॥ १० ॥

वेदान्तविदां मतेषूपनिषदादिशास्त्रेषु, षष्टि[1]-
तन्त्रादिषु, सदसद्वादिनामर्हतां च मतेष्वकल-
ङ्कत्रितयप्रभृतिषु, द्रव्यादिपदार्थवादिकाणादा-
दिशास्त्रेषु आदिग्रहणात्सौगतादिमतेष्वपि यतो
मुक्तिस्तत्साधनानि च श्रूयन्ते, ततः कोऽसौ
शिवागमे विशेषः इति विशेषजिज्ञासया तद्व्यव-

1 षष्टिपदार्थाभिधायकत्वात् षष्टितन्त्रं सांख्यम् ।

सितस्य मुनेः प्रश्नः, न संदिग्धत्वेनादावेव विशेषसंभावनानिश्चयतः श्रोतुं प्रवृत्तत्वात्, नापि विपर्यस्तत्वेन 'ते वव्रिरे शिवज्ञानम्' इत्यभ्यर्थनाप्रवृत्तत्वेन दर्शनान्तरानभिनिविष्टत्वप्रतीतेः । तत्तदागमश्रुता मुक्तिस्तत्साधनानि च पुरस्तात्तेषु तेष्ववसरेषु ग्रन्थकृतैवानुभाष्य दूषयिष्यन्त इति नास्माभिः पृथक् प्रयत्नेन दर्श्यन्ते ॥ १० ॥

अत्र सिद्धान्तः

प्रणेत्रसर्वदर्शित्वा-
न्न स्फुटो वस्तुसंग्रहः ।
उपायाः सफलास्तद्व-
च्छैवे सर्वमिदं परम्[1] ॥ ११ ॥

प्रणेतारो हिरण्यगर्भाद्याः[2] कणादपतञ्जलिकपिलप्रभृतयश्च, ते चासर्वज्ञाः अपरत्वेनाभिमताः स्वप्रमेयादूर्ध्ववर्तिनो युक्त्यागमोपपन्नस्य प्रमेयजातस्य तैरनवगमात् । तदुक्तं

१ उत्कृष्टम् । २ चतुर्मुखाद्याः ।

'स्वभावपुरुषाव्यक्तकर्मकालात्मवादिभिः ।
परमेशमदृष्ट्वैव मुक्तिर्मिथ्यैव कल्पिता ॥'

इति । तथा

'सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
अथोभावपि सर्वज्ञौ मितिभेदस्तयोः कथम् ॥'

इति । तैर्यतः प्रणीतानि शास्त्राणि, अत एवै-तेषु वस्तुसंग्रहोऽप्यस्फुटः पुंस्प्रतिबद्धापवर्गज्ञा-नमस्पष्टमित्यर्थः । ये चात्रोपायाः पुंस्प्रकृतिवि-वेकज्ञानब्रह्माद्वैताभ्यासषोडशपदार्थज्ञानादयः, फलानि च स्वर्गापवर्गलक्षणानि, तत्सर्वं तद्वद-स्पष्टमेव तथातथावक्ष्यमाणनिर्वाहासहत्वात् । तस्मात्तेभ्योऽस्यायं विशेषः—यदिह सर्वं प्रकृष्टं यतः पशुपाशातीतनिरतिशयसर्वार्थज्ञानक्रिया-त्मना परमेश्वरेणेदमादिष्टमिति प्रणेतृगतं परत्वम्, उपायानामपि दीक्षादीनां परिदृष्ट-संवादितत्वात्परत्वम् । तथाहि सद्दीक्षादिना ब्रह्महत्यादिमहापातकयोगिनोऽप्यपेतपातकत्वं दृष्टमित्यतो विषस्य मारणात्मकशक्त्यपहरणवत् पाशानां बन्धकत्वव्यपगमः सिद्धः । तदुक्तं

'शुद्धिं व्रजति तुलायां दीक्षातो ब्रह्महेत्यतो मुख्यात् ।
प्रत्ययतो जानीयाद्बन्धनविगमं विषक्षयवत् ॥'
(तत्त्व० सं० ३६)

इति । फलं चेहान्यैसर्वदर्शनदृष्टाद्भोगापवर्गलक्षणात्फलात्प्रकृष्टम् । उक्तं हि श्रीमन्मतङ्गे

'अग्निहोत्रादिभिः पूतास्तथा चान्द्रायणादिभिः ।
लोकत्रयेऽपि मोदन्ते विमानस्था यशस्विनः ॥
अथाप्नुयुः पदं शाक्रमिष्ट्वा क्रतुशतं विधेः ।
या गतिः शिवभक्तानां शाठ्येनापि महात्मनाम् ॥
न सा यज्ञसहस्रेण प्राप्यते मुनिपुङ्गव ॥' (१।२६)

इति । अपवर्गोऽप्यस्मिन् दर्शने सर्वान्यागमागोचरत्वात् परः तत्तदागमप्रणेतॄणां साञ्जनत्वेनासर्वज्ञत्वात् तदुपदिष्टाया मुक्तेर्मुक्त्याभासत्वात् । उक्तं च श्रीमद्भार्गवोत्तरे

'अन्यतन्त्रेषु ये मुक्ता धर्माधर्मक्षयान्नराः ।
तेऽत्र रुद्राणवः प्रोक्ता गुणत्रयविवर्जिताः ॥'

इति ॥ ११ ॥

---

१ यदि दीक्षा समीचीना भवति, तदेयं परीक्षा—प्रथमं शिष्यस्य पाषाणादिभिस्तोलनं विधेयं, पश्चात्तस्मै दीक्षां दत्त्वा यैरेव पाषाणैः शिष्य उत्तोलितस्तैरेव पुनः पाषाणैरुत्तोलनेन पूर्वमानापेक्षया लघुमानमितो भवति पापक्षयात् । २ अन्यानि यानि सर्वदर्शनानि, तेभ्यो दृष्टा ये भोगापवर्गास्तदात्मकात् फलात् प्रकृष्टमित्यर्थः । ३ अञ्जनमिहाविद्या ।

अथ किं तदन्यदर्शनानामस्फुटत्वमित्याह

वेदान्तेष्वेक एवात्मा
चिदचिद्व्यक्तिलक्षितः ।

'आत्मैवेदं जगत्सर्वं नेह नानास्ति किंचन ।'

तथा

'एको वशी सर्वभूतान्तरात्मा
एकं विश्वं बहुधा यः करोति ॥' (क० ५।१२)

इत्यादिश्रुतिभिः परमात्मैव सकलचिद्-चिद्भावाविर्भावतिरोभावप्रकृतिभूतः परिपूर्ण-षाड्गुण्यवैभवस्वतन्त्रः एकोऽपि सन् संसृत्यर्थं तत्तद्विविधमनोलक्षणोपाधिभेदेन स्वभावा-न्तरानुविधायी यथावदवगतोऽभ्युदयाय भ-वतीति वेदान्तविदः प्रतिपन्नाः । स एव हि सत्त्वात्मनि शान्त उपाधौ शान्त इव, रजो-बहुले तु भगवानिव, अज्ञानात्मके च तमसि मुग्ध इवास्ते, नतु ततोऽन्यत् पृथक् किंचिद्-वतिष्ठते तस्यैव तथा तथा वैचित्र्येणावस्थितेः सत्यत्वात्, द्वैतप्रतिभासस्य द्विचन्द्रादिज्ञानवत् भ्रान्तत्वात् । तथाचाह तत्रभवान् भर्तृहरिः

'यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपे प्रवर्तते ॥'

इति । एवं चाभिन्नमेवेदं परं ब्रह्म परमात्मलक्षणम् । मनसां हि संसारधर्मैः सुखदुःखादिभिर्योगः, परमात्मा तु सूर्य इवाम्भःप्रतिबिम्बभेदैरुपाधिभिरभिन्नोऽपि भिन्न इव प्रतिभाति । तथाच श्रुतिः

'यथा ह्ययं ज्योतिरात्मा विवस्वा-
नपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजस्तथात्मा ॥'

इति ॥

तदेतन्नोपपद्यते, यतः

**प्रतिज्ञामात्रमेवेदं**
**निश्चयः किंनिबन्धनः ॥ १२ ॥**

ओमित्युपपत्त्यनुपपत्तिपर्यालोचनपरिहारेण यद्येतदङ्गीक्रियते, काममवतिष्ठतां, नतु प्रामाणिकरीत्या । यस्मात्प्रतिज्ञामात्रमेवैतत्, न

त्वत्र हेतुदृष्टान्तादिसंभवः । तदभावान्निश्चयः किंनिबन्धनः किमाश्रयः । प्रमाणनिबन्धनो हि निश्चयस्तत्तत्प्रमेयव्यवस्थापनसमर्थो भवति, नान्यथा ॥ १२ ॥

नन्वत्र प्रमाणमागमस्तावच्छ्रुतिरूपः प्रदर्शित एवेत्याह

अथ प्रमाणं तत्रात्मा
प्रमेयत्वं प्रपद्यते ।
यत्रैतदुभयं तत्र
चतुष्टयमपि स्थितम् ॥ १३ ॥

यदि प्रमाणमसत्यरूपं परमार्थतः परमात्मन एव सत्यत्वात्, तथाविधेन प्रमाणेनैतत्प्रमीयमाणं मनोनिर्मितेन प्रदीपेन सन्तमसावस्थितपदार्थप्रविवेचनप्रायम् । अथ सत्यमेव प्रमाणम्, एवं तर्हि स परमात्मा प्रमेयत्वेन स्थितः । प्रमाणं हि प्रमेयं परिच्छिन्दत् प्रमाणतामासादयति, इतरथा प्रमाणतैवास्य न स्यात् । किंच अतः । किमन्यत्, यत्रैतद्द्वितयं प्रमाणप्रमेयलक्षणं, तत्र प्रमातृप्रमित्यात्मकमन्य-

दपि द्वयमन्योन्यसत्त्वव्यपेक्षत्वात् स्थितमेव। नहि प्रमातारं कर्तारमन्तरेण प्रमाणप्रमेययोः क्वचित् किंचित्करत्वं करणकर्मणोः क्रियासिद्धौ कर्त्राश्रयत्वात्। प्रमितिरपि क्रियारूपो व्यापारस्तेभ्यः पृथगेवान्वयव्यतिरेकाभ्यामुपलभ्यत इति चतुष्टयमवश्यंभावि । यदाह आक्षपादः

'चतसृषु चैवंविधासु सर्वोऽपि व्यवहारः परिसमाप्यते ।'
(सू० १ वा० भा०)

इति ॥ १३ ॥

किं चात इत्यत आह

अद्वैतहानिरेवं स्या-
न्निष्प्रमाणकतान्यथा ।
भोगसाम्याविमोक्षौ च
यौ नेष्टावात्मवादिभिः ॥ १४ ॥

प्रमाणप्रमेयव्यवहाराङ्गीकरणे सति अद्वैतहानिरतः स्वाभ्युपगमविरोधः[1], तदपह्नवे तु निष्प्रमाणकत्वम्, किंच भोगसाम्यमविमोक्षश्चात्मवादिभिरनभ्युपगतौ दोषौ प्रसज्येते। सर्वै-

---

1 स्वसिद्धान्तभङ्गादित्यर्थः ।

रेवात्मवादिभिः प्रत्यक्षविरोधभीरुभिर्दृश्यमानं भोगवैचित्र्यमवश्याभ्युपेयम्, आत्मनां च मुक्तिरेष्टव्या निःश्रेयसहेतुतयैव शास्त्राणां प्रवृत्तेः। तदिह

'नादत्ते कस्यचित्पापं नचैव सुकृतं विभुः।'

(भ० गी० ५।१५)

तथा

'न कर्तृत्वं न कर्माणि..................।'

(भ० गी० ५।१४)

इत्यभ्युपगमात् विचित्रफलदायिनां प्रतिनियतजन्तुकृतत्वेन भोगप्रतिनियमकारिणां कर्मणामेवाभावाद्भोगसाम्यप्रसङ्गो दुर्निवारः। आत्मनानात्वे हि कश्चित् दुःखितः, कश्चित् सुखित इति भोगवैचित्र्यमुपपन्नं, नान्यथा। यत एव संसारितायाः प्रभवस्तत्रैव निरंशे परमात्मनि यदि लयो मोक्षस्तत्पुनरपि तत एव प्रादुर्भावः, पुनश्च मोक्ष इति सेयं गतानुगतिका, नतु मोक्षः। तथाह तत्रभवानवधूताचार्यः

'त्वन्मतेश्वरविज्ञाननिष्पन्ना अपि मुक्तयः ।
भजन्ते नाविसंवादमाम्भसा इव कृष्टयः ॥'

इति । ततश्च मोक्षाभावात्तदुपायानाम्

'आत्मा वा अरे ज्ञातव्यः श्रोतव्यो मन्तव्यः ।' (बृ० उ०)

इत्यादीनामानर्थक्यम् । अपिचास्य परमात्मनश्चेतनाचेतनविश्वोत्पत्तिहेतुत्वे चेतनाचेतनत्वं प्राप्तं कार्याणां कारणस्वभावान्वयात् । यदाहुः

'तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।'

इति । ततश्च विरुद्धयोरन्योन्याभिभवेनैवात्मलाभाद्भावाभावयोरिवैकस्मिन् काले चेतनाचेतनस्वभावयोः परमात्मनि अवस्थानं नोपपद्यते । यथाह तत्रभवान् खेटकनन्दनः

'विरुद्धावेककालस्थौ धर्मावेकाश्रयं गतौ ।
इतरेतरनाशात्तौ कुरुतो लोपमात्मनः ॥' (मो० का० २१)

इति । न चास्यानङ्गत्वात् केनचिदङ्गेन चेतनत्वं, केनचिच्चाचेतनत्वं युक्तं, साङ्गत्वाभ्युपगमे तु कुसूलादिवत् कार्यत्वात्परमकारणताहानिः । किंच यद्यदुपादानकारणं तत्तदचेतनं,

---

१ जलोपरिकृता रेखाः ।

यथा मृदादि, अचेतनश्चायं परमात्मोपादानकारणत्वात्, चेतनत्वे नास्योपादानकारणत्वम्। अस्त्वचेतनः को दोष इति चेत्, चेतनानां कारणं स्वयमचेतन इति विचित्रेयमुक्तिः। आचैतन्याभ्युपगमे चास्य बुद्धिमत्कर्त्रनधिष्ठितस्य मृत्पिण्डादेरिव न स्वकार्यजनने सामर्थ्यम्। येऽपि च ग्राहकत्वेन स्वसंवेदनसिद्धा आत्मानो भोक्तारस्तत उत्पन्ना इत्युच्यन्ते, तेऽप्युत्पाद्यत्वात् घटादिवदचेतनाः प्रसज्यन्त इत्यनेकदोषाश्रयस्य परमात्माद्वैतस्यानुपपत्तिः॥

अथैवं वेदान्तवादिनां मते निराकृते कापिलोक्तात् प्रकृतिपुरुषविवेकज्ञानान्निःश्रेयसावाप्तिर्भविष्यति। यथाचाहुः

'एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषात्।'

(सां० का० ६४)

'ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति॥'

(सां० का० ६८)

इति। श्रुतिरप्याह

'अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजा जनयन्तीं सरूपाः।

अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥' (श्वेत० ४।५)

इति । एतदपि निराकर्तुमाह

सांख्यज्ञानेऽपि मिथ्यात्वं
कार्ये कारणबुद्धितः ।

सांख्यज्ञानेऽप्येतदसम्यक्त्वं, यत्कार्ये मायोद्भूतकलाजनिते प्रधाने, कारणबुद्धिः परमकारणताभ्रमः,

'मूलप्रकृतिरविकृतिः' (सां० का० ३)

इति हि तेषामभ्युपगमः, कलादीनां तत्त्वानां पृथक्पृथगुपलभ्यमानप्रयोजनानां कारणभूतस्य जगन्निधिभूतस्य मायात्मनोऽनवगमात् । उक्तं च क्वचित्

'गुणतत्त्वोर्ध्वभोग्यस्य कर्मणोऽनुपलब्धितः ।
कैवल्यमपि सांख्यानां नैव युक्तमसंक्षयात् ॥'
(प० मो० नि० का० ५२)

इति । तदयमर्थः—येयं कापिलैः परमकारणतया परिकल्पिता सत्त्वरजस्तमोलक्षणगुणत्रयसाम्यात्मिका प्रकृतिः, तस्यास्तावन्न गुणेभ्योऽन्यत्वम् । गुणा एव प्रकृतिरिति हि ते प्रतिजा-

नते, गुणेभ्योऽनन्यत्वे चावश्यमनेकत्वमस्याः । यच्चाचैतन्ये सत्यनेकं तत्कारणान्तरपूर्वकं, यथा तन्तवो मृत्पिण्डा वा, सति च कारणान्तरपूर्वकत्वे न परमकारणता । इदं च ते प्रष्टव्याः द्रष्टृदृश्ययोः संयोगः संसारहेतुस्तत्पूर्वकश्च वियोगोऽपवर्गकारणमिति यदुच्यते, तत्र संयोगस्तावत् पुंस्प्रधानयोर्द्रष्टृदृश्यलक्षण एव, न परस्पराश्लेषरूपः उभयोरप्यमूर्तत्वेन तादृशस्यानुपपत्तेः । प्रधानं च न स्वतो दृश्यमप्रत्यक्षत्वेन तस्येष्टत्वात् । नच महदहंकारादिरूपेण परिणतेः द्रष्टा तद्द्रष्टुं शक्नोति । ततश्च कथमनयोराद्यः संयोगः, तदभावाच्च कथं तत्पूर्वको वियोगः । एवं च संयोगवियोगानुपपत्तेरकारणत्वमेव पुरुषार्थं प्रति प्रधानस्य ॥

इतश्च मिथ्यात्वमेतदीयस्य ज्ञानस्य । कुत इत्याह

अकर्तृभावाद्भोक्तुश्च

अभोक्तुः पुरुषस्य भोगायतनेन देहेन भोगसाधनैरिन्द्रियैर्भोक्तव्यैरिन्द्रियार्थैर्भोगेन च सुखदुःखवेदनात्मना फलेन किं प्रयोजनम् ।

यतश्चास्य भोगस्तदधिकरणतत्साधनसहितोऽस्ति, अतो भोक्तृत्वमपह्नोतुमशक्यम्। यश्च भोक्ता स कथमकर्ता अकर्तरि कारणादिसंबन्धस्य निरर्थकत्वात् । दृक्क्रियात्मकत्वमेव स्वरूपं चैतन्यस्य, ततश्च कर्तृत्वनिरासात् ज्ञत्वमपि निरस्तं संवेदनस्यापि क्रियात्मनः कर्तृत्वानपगमात्। नहि अकर्तुः संवेदनं चाप्युपपन्नम् ॥

इतश्च सांख्यज्ञानस्य मिथ्यात्वमाह

स्वातन्त्र्यादप्यचित्त्वतः ॥ १५ ॥

अचेतनमपि प्रधानं बुद्धिमत्कर्तृप्रेरणं विना स्वातन्त्र्येण कथं कार्यकरणे प्रवर्तते । नह्यनुसंधानशून्यस्य बुद्धिमतोऽपि घुणकीटस्येवाक्षरलेखने प्रवृत्तिर्युक्ता, किं पुनः परिणामिनो जडस्य । यश्चात्र चेतनः पुरुषः स तदधीनो न कर्तेति प्रकृतिस्थानां नेयमुक्तिरुचिता ॥ १५ ॥

इदानीमनेकान्तवादिनिराकरणाय संख्यातस्तन्मतं पूर्वपक्षयितुमुच्यते

इह सप्त पदार्थाः स्यु-
र्जीवाजीवास्रवास्त्रयः ।

संवरो निर्जरश्चैव
बन्धमोक्षावुभावपि ॥ १६ ॥
स्याद्वादलाञ्छिताश्चैते
सर्वेऽनैकान्तिकत्वतः ।

तत्र तावत् जीवपदार्थस्तत्तन्त्ररीत्या जीवास्तिकायसंज्ञया परिभाषितः । त्रिविधश्चासौ अनादिसिद्धमुक्तबद्धभेदात् । अत्रानादिसिद्धोऽर्हन् जीवास्तिकायाख्यः, व्यपेतमोहादिबन्धो मुक्तः, तदावृतस्तु बद्धः । अजीवपदार्थोऽपि पुद्गलाकाशधर्माधर्मास्तिकायैश्चतुर्भेदैर्भिन्नः । अत्रापि पृथिव्यादिमहाभूतानि चत्वारि, तृणगुल्मादिलतादिरूपं स्थावरं, जरायुजाण्डजस्वेदजोद्भिज्जभेदभिन्नं जङ्गमं चेति षट्प्रकारोऽयं पुद्गलास्तिकायः । आकाशास्तिकायो द्विरूपः लोकाकाशास्तिकायोऽलोकाकाशास्तिकायश्चेति

'लोकानामन्तराकाशं लोकाकाशमिति स्मृतम् ।
अलोकाकाशास्तिकायो बहिस्तेषां स कीर्तितः ॥'

धर्मास्तिकायः पुद्गलास्तिकायादन्योऽभ्युदयहेतुः । अधर्मास्तिकायोऽपि तत्प्रतिबन्धकृदित्ययमसावजीवपदार्थश्चतुष्प्रकारः । आ-

स्रवश्चक्षुरादीन्द्रियपञ्चकस्य यथास्वं प्रवृत्तिः । तथाचाहुः

'वृत्तिः पञ्चविकल्पा ध्रुवाध्रुवा चक्षुरादिवर्गस्य ।
यैषा स्रवत्यजस्रं यतस्ततोऽसाविहास्रवः प्रोक्तः ॥'

इति । इन्द्रियसंयमलब्धप्रतिष्ठं ध्यानमास्रवनिरोधात्मकत्वात् संवृणोत्यास्रवमिति संवरः । तप्तशिलाशयनकेशोल्लुञ्चनादितपःसंचयनिर्जीर्णवीर्यं कर्म निर्जरशब्देनोच्यते । नानानिरयसंसरणकारणं मोहादिरष्टविधो गणः स्वातन्त्र्यविघातहेतुत्वात् बन्धः । उक्तं च

'मोहादिको गणश्चैष बन्धो जीवस्य कल्पितः ।
लोहपञ्जरसंबद्धं यथा क्षिप्तं जलाशये ॥
अलाबुकमधो याति तद्वज्जीवः सबन्धनः ।'

इति । प्रक्षीणसर्वावरणत्वात् स्वातन्त्र्यसंप्राप्तौ ऊर्ध्वपदासादनं मोक्षः । यदाहुः

'लोहपञ्जरविच्छेदात्प्लवतेऽलाबुकं यथा ।
आरोहति तथा मोक्षं जीवो मोहादिसंक्षयात् ॥
नित्यबोधसुखाद्यैश्च धर्मैर्युक्तः स तिष्ठति ।'

इति । एते च सप्त पदार्थाः स्याद्वादानुगताः । तथाहि देहग्रहणात्पूर्वं जीवः किमस्ति उत नेति यः पर्यनुयुङ्क्ते, तं प्रत्यनेकान्तवादोऽभ्युपगन्तव्यः । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च

नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यं, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं चेति । अत्र हि यद्यत्पर्यनुयोज्यं, तत्तत्सदसत्तया समाधेयम् । तत्र वाच्यतयावाच्यतयापि च विरोधहानिस्तु घटनीयेति ।

'सप्तभङ्ग्यमोघब्रह्मास्त्रवतामजेयमिह किं तत् ।
यत्स्यादस्ति स्यान्नास्ति स्यादिति पुद्गलिभिर्भ्राम्यते
जगत्सर्वम् ॥'

इति । ननु चानेकान्तवादिना तावदेकान्तानभ्युपगमान्नियमेनानेकान्तवादोऽभ्युपगन्तव्यः, तथाच स्वसिद्धान्त एवैकान्त इति कुतः सर्वत्र सप्तभङ्गी ? नैष दोषः अनेकान्तवादेऽप्येकान्तानभ्युपगमात्, यतः स्यादनेकान्तः, स्यादेकान्तः, स्यादनेकान्तश्चैकान्तश्च, स्यादवक्तव्यः, स्यादनेकान्तश्चावक्तव्यश्च, स्यादेकान्तश्चावक्तव्यश्च, स्यादेकान्तश्चानेकान्तश्चावक्तव्यश्चेति ॥

तदेतल्लेशतो दूषयितुमाह

तदेव सत्तदेवास-
दिति केन प्रमीयते ॥ १७ ॥

स्यादस्ति स्यान्नास्ति चेति यदुक्तं, तदसंगतम् । नहि यद्यदैव वस्तु अर्थक्रियाकारितया सत्त्वेनावगम्यते, तत्तदानीमेवासत्त्वेनैकान्ततः कश्चिदप्यवैति । कः किलानुद्भ्रान्तमतिः पुरःप्रस्फुरद्रूपे सदितिप्रत्ययकारिणि घटादौ नायमस्तीति बुद्धिं कुर्यात्, असति च तस्मिन् प्रख्योपाख्याविरहिणि सत्तां निश्चिनुयात्, विधिनिषेधरूपयोर्भावाभावयोः परस्परपरिहारेणैवात्मलाभात् । अभावो हि तदसंभवलब्धजन्मापि यदि तेनैव भावेन सहितः स्यात्तदानीमभाव एव न स्यात् तदुपमर्दनेनैव तस्य स्वरूपसिद्धेः । एवं भावोऽपि यदि स्वप्रतिपक्षेणाभावेनाव्यतिरिक्तो भवेत्तर्हि भाव एव न भवेत् ॥ १७ ॥

ननु घटरूपेण स्वात्मनास्ति घटः, परात्मना पटरूपेण नास्तीति सदसत्त्वमुक्तम् । नतु तद्युक्तम् । किं किलैतावता प्रतिपादितं स्यात् घटः पटात्मना न भवति घटे वा पटो नास्ति । तदेतदभिमतमेव अतदात्मकत्वेन त-

त्राविद्यमानत्वात् । पटाद्विद्यमानोऽयं घटोऽन्य एवेति सिद्धं साध्यते । तदाह

सदन्यदसदन्यच्च
तदेवं सिद्धसाध्यता ।

ननु स्वात्मना यथा घटः स्वसामर्थ्यक्रियां करोति, एवं पटात्मनापि तत्कार्यं कुर्यात्, न च करोति, अतः पटात्मना नास्ति, यदि स्वात्मनापि परात्मवन्न स्यात्, तदा स्वकार्यमपि न कुर्यात् तस्मादस्ति च नास्ति चेत्युक्तम् । तथैतद्घटत्वमघटत्वं च परस्परमभिन्नम् । भेदे हि तद्बुद्ध्यभिधानानुवृत्तिर्न स्यात् , घटश्चाघटश्चेति सामानाधिकरण्यं च न भवेत् । अस्ति चैतत्, तस्मादुभयात्मकोऽसौ क्रमेण तच्छब्दाभिधेयतामुद्वहन् स्यात् घटश्चाघटश्चेत्यविरोधः । एतदप्ययुक्तं यतो नास्ति कश्चिदभेदः । तथाहि अघटशब्दे घटो न भवतीति प्रसज्यप्रतिषेधो वा स्यात्, घटादन्यः पटादिरिति वा पर्युदासः । आद्ये पक्षे घटश्चाघटश्च स्यादित्युक्ते घटाघटयोरव्यतिरेकाद्घटस्याभाव एव घट इत्यभिप्रेतम् । एवं चेष्यमाणे सर्पाभावेऽपि

सर्प एव स्यात् । तथा च सति सर्पादिवत् तद्भावादपि भयं स्यात् । ससर्पनिःसर्पदेशयोः सम एवोपलम्भो भवेत् । पर्युदासपक्षेऽपि घटत्वादन्यदघटत्वं भिन्नमेव पटत्वादिकं कथ्यते। तच्च घटत्वाद्भिन्नम्। अभेदे हि घटादिष्वपि पटबुद्ध्यभिधानानुवृत्तिर्न स्यात्। घटादावपि स्पष्टे घटप्रत्ययश्च न स्यात्। तस्मान्न घटाघटयोरभेद इति न सदसतोरेकाश्रयत्वम् ॥

किंच

असज्जघन्यं सच्छ्रेष्ठ-
मित्यपि ब्रुवते बुधाः ॥ १८ ॥
नैकत्र तदपेक्षातः
स्थितमेवोभयं ततः ।

यदपि सदसच्छब्दाभिधेयं श्रेष्ठाश्रेष्ठरूपं वस्तु, तदपि तद्विदो नैकत्राभिदधति तस्यापि भिन्नविषयत्वात्। नहि यदेवाश्रेष्ठं, तदेव श्रेष्ठमिति वक्तुं शक्यम् । अयमेव हि भावानां भेदः—यद्विरुद्धधर्माध्यासः । अथ मतं यत्तच्छ्रेष्ठाश्रेष्ठत्वं, तदेकत्र संभवत्येव अपेक्षावशात्।

यथायं देवदत्तो यज्ञदत्तसकाशादभिरूपः, चैत्रापेक्षया तु नीरूप इति। एवं तर्हि यज्ञदत्तस्याश्रेष्ठत्वं चैत्रस्य च श्रेष्ठत्वमित्युभयं तत इत्यपेक्षातः। एवं भिन्नं लब्धं यदपि द्वयं, तदापेक्षिकत्वादसत्यम्। अपेक्षा हि नाम न वास्तवी। तस्याः किल वस्तुनः सति सद्भावे किं प्रयोजनं सिद्धसत्ताकत्वेनानपेक्षत्वात्। तथा चाहुः

'संश्च सर्वो निराशंसो भावः कथमपेक्षते।'

इति। न चालब्धसत्ताके वस्तुन्यपेक्षायाः किमपि करणीयमस्ति, तस्यासत्त्वादेव तदपेक्षानुपपत्तेः। तदिदमुक्तम्

'अपेक्षा न सतां सिद्धेरसिद्धेरपि नासताम्।'

इति। तदेवं न कथंचिदपि सदसतोरभेदोपपत्तिः॥

अथ चेत्तदसद्भावे
सदयुक्ततरो यतः (?)॥ १९॥
तत्कर्मसंकरभया-
दव्यापित्वं च ते जगुः।

सामान्येतरसंबन्ध-
ज्ञानाभावादचेतसः ॥ २० ॥

तस्य देहात्पूर्वं सदसत्त्वेनाभिमतस्य व्याप-
कत्वात् पुद्गलान्तरैः सह कर्मसंकरः शङ्क्यते ।
व्यापकत्वे हि विप्रकीर्णानां कर्मणां भोक्तॄन् प्रति
नियमः किंकृतः, अव्यापकानां तु तेषां प्रत्येकं
व्यवस्थितो मोहादिबन्धपदार्थ एव तन्नि-
यामक इति कर्मसंकरभयादव्यापकत्वमचे-
तसः दुर्बुद्धयः जगुरूचुः । कुत एषां मन्दबु-
द्धित्वमित्याह—सामान्येतरसंबन्धज्ञानाभावात्
समान्येनानादिकालीनेनात्मनो व्यापकत्वेन
यः संबन्धः सर्वकालभावित्वेन साधारण्यमस्य
इतरेण च मुक्तावेव संजातत्वात् तथारूपेण,
तयोर्ज्ञानं सम्यगवबोधस्तेषां पुद्गलवादिनां
नास्ति । यदि हि तदवबोध एषां स्यात्, तदा
नैवमयुक्तमेव कल्पयेयुर्मोहादिपाशावरुद्धसह-
जव्यापकस्वभावस्यात्मनः स्वभावत एवाव्या-
पकत्वाभ्युपगमो यस्तस्य विरुद्धत्वात् ॥ २० ॥

तथाहि

यः प्रागव्यापकः सोऽन्ते
कथमन्यादृशो भवेत् ।
स विकासादिधर्मा चे-
त्ततो दोषपरम्परा ॥ २१ ॥

प्राक् पूर्वं संसारावस्थायामव्यापको यः, स कथं मोक्षे व्यापकः, व्यापकत्वं च तदानीमप्यभ्युपगन्तुमयुक्तम्। एवं हि संसारमुक्त्योरविशेषः स्यात् । अथ तथाविधधर्मस्य विकाससंकोचधर्मित्वमभ्युपगम्यते—यदुत संसृतौ संकोचमेति मुक्तौ तु विकसति इति, ततो विपरिणामित्वजडत्वाद्यनेकदोषसन्ततिः प्रसज्यत इति न कथंचिदपि सदसद्वादिमतमुपस्थापयितुं शक्यम् ॥ २१ ॥

इदानीं पादार्थिकदर्शनप्रदर्शितमुक्तिनिराकरणायाह

षट्पदार्थपरिज्ञाना-
न्मिथ्याज्ञानं निवर्तते ।

रागद्वेषौ ममत्वं च
तद्विशेषगुणास्ततः ॥ २२ ॥
क्रमशो विनिवर्तन्ते
देहसंयोगजा यतः ।
सा मुक्तिर्जडतारूपा
ततो मुक्तः शवो न किम् ॥२३॥

द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुरित्यभ्युपगमात् द्रव्यादिपदार्थषट्कस्य यथावज्ज्ञानादज्ञाननिवृत्तौ रागादिदोषोपशमे बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मगुणानां देहसंयोगजत्वात् क्रमेण निवृत्तौ या मुक्तिः, सा बुद्ध्याद्युपरमे सति आत्मनस्तद्विनाकृतस्य किंचिज्ज्ञत्वोपरमाज्जडतारूपाङ्गीक्रियते, ततः शवोऽपि किं न मुक्तः कल्प्यते तस्यापि बुद्ध्यादिगुणविरहेणेच्छाज्ञानादिविनाकृतत्वादिति भावः ॥ २३ ॥

अथ सौगतमुक्तिनिराचिकीर्षया तन्मत-मनुभाष्य दूषयति

चिद्व्यञ्जकस्य कर्मादेः
क्षणिकत्वान्मुहुर्मुहुः ।
व्यज्यते जायमानैव
क्षणिकेति मता परैः ॥ २४ ॥

चिज्ज्ञानं ग्रहीतृरूपं संवेदनम् । सा चित् व्यञ्जकस्य व्यक्तिहेतोः कर्मणो व्यापारस्य योगसंग्रहणादेर्यदि वा कर्मणो ग्राह्यस्य घटपटादेरादिग्रहणात्करणस्य चक्षुरादेः, सहकारिण आलोकादेश्चानतिस्थैर्यात् प्रतिक्षणमुत्पद्यमानैव व्यज्यते प्रकटीभवति । अयमर्थः—वक्ष्यमाणसत्कार्यवाददृशा अभिव्यक्तितिरोभावभाजां भावानां व्यापारभेदेन अवस्थादेशकालादिभेदेन चानतिस्थैर्यात्तज्ज्ञानमपि तत्तदुपाधिभेदान्मुहुर्मुहुर्व्यज्यमानं क्षणिकं, तदेव च प्रमाणमिति परे मन्यन्ते । तदाहुः

'नित्यं प्रमाणं नैवास्ति प्रामाण्याद्वस्तुसंगतेः ।
ज्ञेयानित्यतया तस्या अध्रौव्यात्क्रमजन्मनः ॥'

इति । चिदेव हि क्षणिका तत्तदर्थप्रकाश-रूपानुभवसिद्धा, नत्वेतद्व्यतिरिक्त आत्मा विद्यते संवेदनव्यतिरिक्तस्य भेदेनाप्रतिभास-नात् । यथाहुः

'एकमेवेदं संविद्रूपं हर्षविषादाद्यनेकाकारविवर्तं
पश्यामः, तत्र यथेष्टं संज्ञाः क्रियन्ताम् ।'

इति । संवेदन एव क्षणिके जलधाराप्रवा-हवत् सदृशपरापरोत्पत्तिभ्रमाद्विकल्पेन स्थैर्य-मध्यारोप्यत इत्यविद्याजनिता सेयमात्मदृष्टिः । तदुक्तं

'मिथ्याध्यारोपहानार्थं यत्नोऽसत्यपि भोक्तरि ।'

इति । आत्मग्रहे हि सति तदन्यत्र परत्वाभिमा-नात् स्वपरभेदः, ततश्च रागद्वेषाद्यनर्थोद्भवादा-त्मग्रहो बन्ध इति भगवता सुगतेन नैरात्म्य-भावनोपदिष्टा । यदुक्तम्

'आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ ।
अनयोः संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥'

इति । नचाभ्युपगतस्याप्यात्मनो नित्यत्वं घटते यत्सत्, तत्सर्वं क्षणिकमक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तेः सत्ताया ए-वासिद्धत्वात् । तदाहुः

'अर्थक्रियासमर्थं यत्तदत्र परमार्थसत् ।
असन्तोऽक्षणिकास्तस्मात्क्रमाक्रमविरोधतः ॥'

इति । तथाहि नित्यो भावः क्रमेण वार्थक्रियां कुर्याद्युगपद्वा । न तस्य तावत्क्रमेण करणमुपपद्यते यस्मादयमप्रच्युतोऽनुत्पन्नस्थिरैकस्वभावः । सच कालान्तरनिर्वर्त्यामर्थक्रियां तदानीमेव किं न करोति, नह्यसाववसरान्तरकरणीयं स्वभावान्तरेण कुर्यात् स्वभावस्यैकरूपत्वात्, स्वभावान्यथाभावे हि तद्वतोऽपि तदव्यतिरेकाद्विनाशस्ततश्चानित्यत्वम् । अथोच्यते स पदार्थोऽर्थक्रियां करोत्येव यदि सहकारिणोऽस्य संनिहिताः स्युः, तदसंनिधानादकुर्वाणस्य नास्योपालम्भयोग्यत्वमिति । नैवं, सहकारिणोऽस्याकिंचित्कराश्चेत्किमर्थं तानपेक्षते । किंचित्करत्वे तु यत्तत्किंचित्कुर्वन्ति, तत्ततोऽव्यतिरिक्तं, व्यतिरिक्तं वा ? व्यतिरिक्तकरणे किं तस्य तदपेक्षया, तदव्यतिरिक्तकरणे स एव सहकारिभिः क्रियत इत्यायातम् । न चास्थिरस्य करणमुपपन्नं तत्स्वभावस्य सतः स्वहेतुभ्य एवोत्पत्तेः, कृतस्य च कर्तुमशक्य-

त्वात् । अथ स्थिरस्वभावस्यास्य सहकारिणोऽतिशयाधानं कुर्वन्ति येन कालान्तरेऽर्थक्रियां करोतीति । एतदप्यसद्यस्मादनाहितातिशयात् स्वभावादाहितातिशयोऽन्य एवेति स्थिरैकस्वभावतैव त्रुट्यति । तथाहि सहकारिभ्योऽतिशयोत्पत्तौ स पूर्वोत्पन्नानाहितातिशयस्वभावः स्वत एव विनष्टोऽभ्युपगन्तव्यः । तस्यानश्वरस्वभावत्वेन नाशहेतोरपि तत्राकिंचित्करत्वात्, विनश्वरोद्भवस्वभावत्वे वा वैयर्थ्यात्तस्य च स्वभावस्याविशेषात् प्रतिक्षणमिति क्षणिकता । तदेवं न नित्यस्य क्रमेणार्थक्रिया । नापि युगपत्करणमुपपद्यते यस्माद्यौगपद्येन निर्वर्तितार्थक्रियोऽपि तस्मात्स्वभावान्न विरमेत् स्थिरैकस्वभावत्वात्, स्वभावविरतौ स्वभावहानिः क्षणिकत्वमेव । अथ नास्य स्वभावान्तरयोगः, किंतु न करोत्येवायं, कार्यस्य स्वयं विपाकः कृतस्य यत्कर्तुमशक्यत्वमेव । तदप्ययुक्तं तस्य तावदर्थक्रियामकुर्वतोऽस्यैव सत्ताया एव दुर्लभत्वात्

'अर्थक्रियासमर्थं यत्तदत्र परमार्थसत् ।'

इत्युक्तत्वात् । अर्थक्रियाकरणलक्षणात् स्वभावात्तदकरणात्मकस्वभावोऽन्य एवेति कथमस्य न स्वभावान्तरयोगः । यदि च यौगपद्येनापि कुर्वन्ननवरतं करोति, तदा स्वभावाविशेषात् सर्वदा सर्वार्थक्रियाकरणप्रसङ्ग इति क्षणिकमेवेदं संवेदनं युक्तं, नतु तद्व्यतिरिक्तनित्यात्मसिद्धिरिति पूर्वः पक्षः ॥ २४ ॥

सिद्धान्तस्तु

तदसत्कर्मणो भोगा-
दतीतानुभवस्मृतेः ।

तदेतत्क्षणिकत्वं संवेदनस्य, नैरात्म्यभावनाभ्युपगमनं च न युक्तं स्वसंवेदनसिद्धस्य स्थिररूपस्यापरोक्षस्यात्मनः प्रकाशनात् । ननु सदृशपरापरक्षणोत्पत्तिविप्रलब्धत्वात् स्थैर्यमध्यारोपितमित्युक्तम् । तदयुक्तं स्वात्मनि क्रियाविरोधादध्यारोपानुपपत्तेः । यदपि क्षणभङ्गसाधनार्थमक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्सत्ताया एवासिद्धत्वाद्यत्सत् तत्क्षणिकमित्यनुमापनघटनं कृतं, तत्स्वसंवेदन-

लक्षणप्रमाणबाधितत्वादयुक्तमक्षणिकस्य सतः सर्वस्य स्वसंवेदनस्यानुभवसिद्धत्वात्, अनैकान्तिकं च सर्वस्य सतः क्षणिकत्वेन व्याप्तिप्रदर्शने सति अक्षणिकस्य परमार्थसतो वैधर्म्यदृष्टान्तस्यासंभवाद्विपक्षव्यावृत्त्यदर्शनेन हेतोः केवलान्वयिनो गमकत्वाभावात्। विरुद्धश्चायमसत्त्वाख्यो हेतुः साध्यविपर्ययेणाक्षणिकत्वेन सर्वार्थक्रियाकारिणि घटादौ सिद्धव्याप्तिकत्वात्। यदप्येतद्व्याप्तिसाधनार्थं नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति हेत्वन्तरं, तदप्याश्रयासिद्धत्वादयुक्तम् । नहि नित्यः कश्चिदर्थो भवद्भिरभ्युपगतो यत्रायं हेतुः सिद्धः स्यात् । नचानित्यस्यापि मण्यादेरर्थस्य क्रमेणानेकदेशस्थांस्तांस्तान्भावान्प्रकाशयतो, युगपच्चैकगृहगतान् घटपटादीनवभासयतः कश्चिद्विरोधः । अपिच न तावत् क्षणिकं संवेदनमनेकक्षणनिर्वर्त्यार्थक्रियानुष्ठानसमर्थमुत्पत्त्यनन्तरं ध्वंसिनस्तदुपपत्त्ययोगात् । नचारोपितं स्थैर्यं तत्तद्व्यापारनिर्वर्तनक्षमं, तस्य च स्वात्मन्यध्यारोपानुपपत्तेरित्युक्तत्वात् । आरोप्यस्य चावस्तु-

त्वेनार्थक्रियानुष्ठानमसंबद्धम्। वस्तुत्वे च स्थिरस्यावबोधस्यात्मरूपत्वेनास्माभिरभ्युपगमान्नास्ति भेदः । क्षणव्यतिरिक्तश्च सत्तासन्तानो न कथंचिदुपलभ्यते, तस्मात्कर्मानुष्ठानदर्शनान्यथानुपपत्त्या वस्तुसिद्धमेवास्य चिदात्मनः स्थैर्यम् । इतश्चैतत्क्षणिकत्वमयुक्तं कर्मणो भोगात्। क्षणान्तरानन्वयिनि विज्ञाने कर्मभोगोऽनुपपन्नः, येनैव हि दृष्टं सेवाकृष्यादि कर्म कृतं, तमेव तस्य भोक्तारमुपलभामहे । दृष्टवच्चादृष्टकल्पना युक्तिमती। यद्युभयजन्मनि शरीरादिभेदेऽप्यभिन्न एक एव भोक्ताभ्युपगम्यते, तदाहि कर्मफलभोगो निर्बाधो भवति। अथ चैत्यवन्दनाख्यं कर्मान्येन कृतमन्यस्यैव तत्फलेन स्वर्गादिना योग इत्यकृताभ्यागमकृतविप्रणाशप्रसङ्गो दुर्निवारः । उक्तं च श्रीमतङ्गे

'कृतमेकेन यत्कर्म तद्विपाकं परः कथम्।
प्राप्नोति युक्तिदौर्बल्यात्········ ॥' ( ६।२८)

इति । ननु नायं दोषः ऐहिकस्य कर्मणो

लब्धशरीरेण ज्ञानसन्तानेन परत्र भोगोपपत्तेः। तदयुक्तमशरीरस्य ज्ञानसन्तानस्य सद्भावे प्रमाणाभावात् । कर्मफलभोगान्यथानुपपत्त्या विज्ञानसन्तानसिद्धिस्तत्सिद्ध्या च कर्मफलभोग इत्यनुपपन्नमस्थैर्यं संवेदनस्य । इतश्च क्षणिकं संवेदनमित्यसत् । कुत इत्याह 'अतीतानुभवस्मृतेः' अतीतः समतिक्रान्तो यस्यानुभवस्तस्य स्मरणात् । यदा हि स्थिरस्वभाव उभयकालानुसंधाता आत्माभ्युपगम्यते, तदानुभूतविषयासंप्रमोषरूपं स्मरणमुपपद्यते, नतु क्षणिकत्वे। नहि प्राक्तनक्षणानुभूतसुखदुःखादिसंवेदनं वर्तमानेन कालान्तरभाविना वा क्षणेन स्मर्तुं शक्यं तस्यान्यत्वात् यथा न देवदत्तानुभूतं तत्पुत्रः स्मरति । दृश्यते च शैशवाद्यनुभूतं यौवनस्थाविराद्यवस्थासु स्मर्यमाणम् । साचेयमतीतानुभवस्मृतिः क्षणिकतां विज्ञानस्य निरस्यति, नतु स्थिरस्वभावमात्मानमनुमापयति तस्य स्वसंवेदनसिद्धस्य स्वानुभूत्येकप्रमाणत्वात् ॥

तदेवं कर्मोपभोगादतीतानुभवस्मृतेश्च न क्षणिकत्वमुपपद्यते चितः । तदाह

स्थितिर्निरन्वये नाशे
न स्मृतेर्नापि कर्मणः ॥ २५ ॥

सूच्यग्रनिपतत्सर्षपवदनवस्थायित्वादविश्रम्यैव विनश्यत्सु विज्ञानक्षणेषु प्रोक्तवन्न स्मृतेरवस्थितेरुपपत्तिः कल्प्यते, नापि कर्मण इत्यलमलीककल्पनाकुलीकृतस्थितिना क्षणभङ्गाभिनिवेशेन ॥ २५ ॥

किंचायमपरोऽत्र दोषः—यदुत

विनाशलक्षणोऽपैति
न मुक्तावप्युपप्लवः ।
नचास्त्यनुभवः कश्चि-
द्भवावस्था वरं ततः ॥ २६ ॥

शुद्धचित्संततिसमुत्पादो भवतां मोक्षः स्यात्, यदि वा प्रदीपनिर्वाणरूपः । आद्ये पक्षे स्वपरिकल्पितस्य प्रतिक्षणाविनाशित्वलक्षणस्योपप्लवस्य मुक्तावप्यनुपशमः । द्वितीये तु प्रदीपनिर्वाणरूपत्वात्संवेदनासंभवतः क-

श्चिदप्यनुभवो नास्तीति तथाविधात्संवेदन-
विनाशात्मकात् काष्ठकुड्यादीनामपि सुलभा-
न्मोक्षात्संसारावस्था वरं सौगतानामिति कृत-
मेवंविधमोक्षलिप्सया ॥ २६ ॥

तदियता वेदान्तसांख्यसदसत्पादार्थिका-
दिमतेषु असर्वदर्शिप्रणेतृत्वाद्वस्तुसंग्रहस्यास्फु-
टत्वमसंबद्धतां चोद्भाव्य दर्शनान्तराणामप्ये-
षैव वार्तेति तत्तदभिनिवेशिनां न निरतिश-
यनिःश्रेयसयोग इति वक्तुमाह

इत्याद्यज्ञानमूढानां
मतमाश्रित्य दुर्धियः ।
अपवर्गमभीप्सन्ति
खद्योतात्पावकार्थिनः ॥ २७ ॥

शिवशक्तिविद्येश्वरादावुपादेयसतत्त्वे मल-
कर्ममायादौ च हेयपरमार्थे येषां नास्त्यवबोधः,
तेषामज्ञानमूढानां दर्शनान्तरप्रणेतॄणां संबन्धि
मतं शास्त्रमाश्रित्याकुशलमतयो ये मुक्ति-
मिच्छन्ति, ते खद्योतादग्न्यभ्यर्थिनः कीटमणे-
र्वह्निं लिप्सवः । ते यथा व्यर्थश्रमास्तथा ते
विफलक्लेशा भवन्तीत्यर्थः ॥ २७ ॥

तथाहि

यत्कैवल्यं पुंस्प्रकृत्योर्विवेका-
द्यो वा सर्वं ब्रह्म मत्वा विरामः ।
या वा काश्चिन्मुक्तयः पाशजन्या-
स्तास्ताः सर्वा भेदमायान्ति सृष्टौ ॥

यदेतत्कपिलकल्पितं पुंस्प्रकृत्योर्विवेकात्कैवल्यं, या च सर्वं खल्विदं ब्रह्मेति मत्वा द्वैतविकल्पप्रहाणे सति ब्रह्मप्राप्तिः, याश्च पाशजन्याः काश्चित्पाञ्चरात्रादिभिर्मुक्तयोऽभ्युपगताः । यथाहुः

'ईशास्तु ते समभवन्प्रकृतेः परस्याः
कृष्णानिरुद्धमकरध्वजरौहिणेयाः ।'

इति । यथा वा कालैकवादिनां

'कालः सृजति भूतानि कालः संहरति प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥'

इति । यथा वा केषांचित्

'चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तद्विनिर्मुक्तं मोक्ष इत्यभिधीयते ॥'

इति । एताः किल प्रकृतिकालबुद्ध्यादीनां बन्धकत्वेन पाशरूपत्वात् पाशजन्या मुक्तयः सर्गारम्भे भेदमायान्ति विनश्यन्तीत्यर्थः । यदुक्तं श्रीमन्मतङ्गे

'तस्मात्प्रधानशब्देन तत्त्वमुक्तमचेतनम् ।
तस्मात्परं नास्त्यपरं येषां भावः प्रतिष्ठितः ॥
न ते मुक्ता मुनिव्याघ्र पुनरायान्त्यधोगतिम् ।' (१५।७)

इति । तथा

'उपादानेषु लीनानां पुनरावर्तनं ध्रुवम् ।'

इति । तेषां तु तथाविधमिथ्याध्यासभाजां न निरन्तरमज्ञानध्वान्तसन्ततिरन्तःकरणमावृणोति, अपितु ते क्रमेण विवेकप्रथनात्परमेश्वरानुग्रहास्पदतां कस्मिंश्चिदपि काले यास्यन्ति । तथाचोक्तं श्रीमत्पौष्करपारमेश्वरे

'न मोक्षं याति पुरुषः स्वसामर्थ्यात्कदाचन ।
मुक्त्वा प्रसादं देवस्य शिवस्याशिवहारिणः ॥'

इति ॥ २८ ॥

अथैवं मतान्तरोक्ताया मुक्तेः प्रागुक्तवदसत्यत्वे, ततः किं तद्वैलक्षण्यमिहत्ययोः सिद्धिमुक्त्योरित्याह

शैवे सिद्धो भाति मूर्ध्नीतरेषां
मुक्तः सृष्टौ पुनरभ्येति नाधः ।
विश्वानर्थान्स्वेन विष्टभ्य धाम्ना
सर्वेशानानीशितः सर्वदास्ते ॥२९॥

इह शास्त्रे यः सिद्धः स विविधभुवनोपपन्नविचित्रैश्वर्यसंपादिततत्तद्भोगभाक् सर्वोत्क-

र्षशाली भवति । तथाचोक्तं बृहस्पतिपादैः

'यन्माहात्म्यं भगवति परमशिवेऽनुपममव्ययमचिन्त्यम् ।
तन्माहात्म्यं सिद्धे हतबन्धनमण्डले भवति ॥'

इति । नच दर्शनान्तरप्रतिपन्नब्रह्मलयसंविद्विनाशप्रकृतिपुरुषविवेकाद्यात्मनो मोक्षस्यैवंगुणत्वमित्युक्तम् । यस्त्वस्मिन्दर्शने मुक्तः, स बन्धकारणानां मलकर्ममायापरमेश्वरनिरोधशक्तीनामुपरताधिकारत्वात् पुनः सर्गप्रारम्भे नाधोऽभ्येति न संसारी भवतीत्यर्थः। किं तर्हि स करोतीत्याह विश्वानर्थानिति आविर्भूतनिरतिशयसर्वार्थज्ञत्वकर्तृत्वतः शिवसमानमहिमत्वात् स्वतेजसा समधिष्ठितसर्वार्थोऽपि सन् मुक्तात्मा न किंचित्करोति करणीयाभावात् । एवं चेन्मुक्तेः पूर्वमकिंचित्करोऽभूत्, मुक्तश्च तद्रूप एवेति कोऽस्य मुक्तौ विशेषः । अयं विशेषः—यत् सर्वेशानेन परमेश्वरेणानीशितः अप्रेरितस्तदानीमसौ भवति । किं किंचिदेव कालमप्रेर्यः। नेत्याह सर्वदेति सर्वकालं तं प्रत्यप्रेरकः शिवभट्टारको भवतीत्यर्थः ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ द्वितीयं प्रकरणम् ॥ २ ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

(तृतीयः पटलः)

तदेवं दर्शनान्तरापरिदृष्टमत्युत्कृष्टं भुक्तिमुक्त्याख्यं फलं, तत्साधनोपायश्चास्मिन् शास्त्रे प्रतिपाद्यत इत्युक्तम् । इदानीं 'सर्वेशानानीशितः' इति प्राक्तनप्रकरणोपसंहारे सर्वेशानशब्देन सूचितं समर्थयन्नीश्वराख्यं पदार्थमुपपादयितुमाह । अत्र च प्रकरणान्तरोपक्रमे पञ्चप्रकारः संबन्धो वाच्यः । तथाचोक्तं श्रीमत्पौष्करे

'अनन्तरं यत्पटलात्सूत्रं तन्त्रे प्रवर्तते ।
वक्तव्यस्तस्य संबन्धः पञ्चधा समवस्थितः ॥
तन्त्रवस्तुत्रयात्सूत्राद्वाक्यात्प्रकरणात्तथा ।
पटलाच्च······················ ॥'

इति । तन्त्रवस्तुनः पतिपशुपाशात्मकस्य पदार्थत्रयस्य 'त्रिपदार्थं चतुष्पादम्' इत्यनेनोपक्रमात् सांप्रतं पतिपरीक्षालक्षणः संबन्धः ।

सौत्रस्तु 'सर्वकृत्सर्वविच्छिवः' इत्यनेनोक्तः । वाक्यात्मकश्च

'तेन स्वभावसिद्धेन भवितव्यं जगत्कृता ।'

इत्यादिभिर्वाक्यैः । प्राकरणिकोऽपि विद्यापादाख्येन प्रकरणेन । पाटलिकस्तु पूर्वपटलान्ते सर्वेशानशब्देन सूचितान्वयः । अनेनैव क्रमेण विद्यापादान्तं यावत् संबन्धपञ्चकमनुसंधेयम् ।

अथोपलभ्य देहादि
वस्तु कार्यत्वधर्मकम् ।
कर्तारमस्य जानीमो
विशिष्टमनुमानतः ॥ १ ॥

अथशब्दोऽधिकारार्थः । अत्र हि पतिपदार्थपरीक्षाधिक्रियत इत्यर्थः । अत्र च तनुकरणभुवनादीनां भावानां संनिवेशविशिष्टत्वेन कार्यत्वं बुद्ध्वा अनुमानेनैषां बुद्धिमत्कर्तृपूर्वकत्वं प्रतीयत इति तात्पर्यम् । ननु देहस्यैव तावत्कार्यत्वमसिद्धं, नहि क्वचित्कदाचिद्देहः केनचित्क्रियमाणो दृष्टः । सत्यं, केनचित्क्रिय-

माणत्वं देहस्य न दृष्टमिति कर्तृदर्शनापह्नवो न युक्तः, तस्यानुमेयत्वेन दर्शनाविषयत्वात् । देहस्य तु क्रियमाणत्वं कथं न दृष्टं? अभूत्वा भावित्वमेव हि कार्यत्वं, तच्च देहस्योपलभ्यत एव । तथाहि शुक्रशोणितकललाद्युपादानात् 'दिह उपचये' इति धात्वर्थगत्या प्रतिमासोपचीयमानो गर्भस्थो देहः प्रतीयते इति कथमेष कार्यत्वमतिक्रामेत् । किंच संनिवेशविशेषवत्त्वाद्विनश्वरत्वाच्च देहादेः कार्यत्वमपह्नोतुमशक्यम् । यद्यत्संनिवेशविशेषवद्विनश्वरं, तत्तत्कार्यं यथा घटादि । तथा चैते देहादयः पदार्थाः, तस्मादेतेऽपि कार्याः । एवं च सति देहादि वस्तुजातं धर्मि बुद्धिमत्कर्तृपूर्वकमिति साध्यो धर्मः कार्यत्वात् । यद्यत्कार्यं, तत्तद्बुद्धिमत्कर्तृपूर्वकं दृष्टं यथा रथादि । यत्तु नैवंविधं, न तत्कार्यं यथात्मादि । ननु घुणाक्षरे कार्येऽपि न बुद्धिमत्कर्तृपूर्वकत्वमस्तीत्यनैकान्तिकः कार्यत्वहेतुः । नैवं, तत्र कार्यताया एवानन्वयात् । यथेष्टसंचारमात्र एव किल घुणस्य कर्तृता, नतु विशिष्टसंनिवेशाक्षरनिर्मितौ । स

तु संनिवेशस्तथा अन्यथास्य परिसर्पतः स्वभावत एवोपपद्यते । ननु तद्भावे भावात् तदभावे चाभावात् घुणकर्तृकमेवाक्षरम् । यद्येवं, तत्तथाचारित्वे भावात् अतथाचारित्वे चाक्षरस्यानभिव्यक्तेरव्यवधानेन घुणाक्षरस्य बुद्धिमत्कर्तृपूर्वकत्वमस्तीति कुतः कार्यत्वहेतोरनैकान्तिकत्वम् । नचायमकृष्टजातैः शाल्यादिभिर्वनद्रुमादिभिर्वानैकान्तिकः, तेषु कर्त्रभावस्यानिश्चयात् तेषां च पक्षीभूतत्वात् । नन्वसिद्धव्याप्तिकस्य पक्षीकरणमात्रेण यदि हेत्वाभासानां निरासस्तर्हि न केचन हेतवो हेत्वाभासाः । भवेदेतद्यद्ययं कार्यत्वहेतुरसिद्धव्याप्तिकः स्यात् । यावता दृष्टान्तीकृतदृष्टकर्तृकघटादिव्यतिरिक्तास्त्रैलोक्योदरवर्तिनस्तनुकरणभुवनादयो भावा धर्मिणः कर्तृपूर्वकाः कार्यत्वादुपलभ्यमानकर्तृकघटादिवदित्यनुमाने क्रियमाणे किमन्यदवशिष्यते, यत्र कार्यत्वस्य व्याप्तिर्न सिद्धा स्यात् । ननु चात्रानुमाने य एव घटादिर्दृष्टान्ते धर्मी, स दृष्टकर्तृकत्वान्न तावत् सिषाधयिषितेश्वरनिर्वर्त्यः, तस्य तु कुम्भकार-

कार्यत्वेनेशस्यासर्वकर्तृत्वम्, अथेश्वरकर्तृत्वं दृष्टान्तधर्मिणो घटादेरिष्टं, तत्साध्यभ्रष्टो दृष्टान्तः प्रतीतिबाधश्च। नहि घटादिकमर्थं कुलालाद्यन्वयव्यतिरेकानुविधायिनमीश्वरकर्तृकत्वेन कश्चिदप्यवैति। विरुद्धश्चायं हेतुः, यादृशो हि घटादेः कर्ता कुलालादिः क्लेशादिभागनीशो विनश्वरश्च, तादृक् जगतोऽपि कर्ता प्राप्नोति। तदुक्तं जैमिनीयैः

'कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते।
नेश्वराधिष्ठितत्वं स्यादस्ति चेत्साध्यहीनता॥
तथा सिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता।
अनीश्वरविनाश्यादिकर्तृकत्वं प्रसज्यते॥' (श्लो० वा०)

इति। स्यादेष सर्वदोषावकाशो यद्यस्माभिरसर्वविषयमीश्वराधिष्ठानमुपगम्यते, यावता येऽपि तु कुम्भादीनां कर्तारः कुलालादयस्तेऽपि तत्प्रत्यवेक्षणानुगृहीतशक्तयस्तत्तत्कार्यनिर्वर्तनसमर्था भवन्तीति ब्रूमः। ननु कुत्रैतत् दृष्टं यत्कुलालतन्तुवायादिसद्भावे भावात् तदभावे चाभावादपि घटादि कार्यजातमीश्वराधिष्ठितमिति। कुत्र वा न दृष्टं किं न श्रुतं भगवता

स्वयमादिष्टं सर्वजनप्रसिद्धेष्वपि शास्त्रेषूद्धुष्यमाणं भवद्भिः

'गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥'
(गी० १५।१३)

इति,

'न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ।'
( गी० १०।३९ )

इति, श्रुतावपि

'यो रुद्रो अग्नौ यो अप्सु य ओषधीषु
यो रुद्रो विश्वा भुवनाविवेश ।' ( क० शा० ४०।५ )

इति । अत एव भवदुद्भावितः प्रतीतिविरोधोऽपि निरस्तः

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥'

इत्येवंविधायाः प्रत्युत प्रतीतेः सिद्धत्वात् । न चायं विरुद्धो हेतुर्विपर्ययव्याप्त्यभावात् दृष्टान्तधर्मिणि घटादौ स्वसाध्येन बुद्धिमत्कर्तृपूर्वकत्वेन व्याप्तेः सिद्धत्वात् बुद्धिमत्कर्तृपूर्वकत्वविरहिणो विपक्षादात्मादेर्व्यावृत्तत्वात् । स विरुद्ध उच्यते यः सपक्षनिवृत्तोऽपि विपक्षमेव व्याप्नोति यथा नित्यः शब्दः कृतकत्वा-

दिति । बुद्धिमत्कर्तृपूर्वकत्वं च घटस्य कुम्भकारकार्यत्वात्सिद्धमिति का साध्यभ्रष्टता । न च सर्व एव दृष्टान्तधर्माः साध्यधर्मिणि क्वाप्यनुमाने भवन्ति, येनानीश्वरविनाश्यादिकर्तृकत्वप्रसङ्गः स्यात् । तथाहि—अनित्यः शब्दः कृतकत्वात् घटादिवदित्यत्रापि शब्दस्य कुम्भकारकार्यत्वरौहित्यपारिवर्तुल्यादयो घटधर्माः किमिति न भवन्तीति भवद्भिर्वक्तव्यमिति न किंचिदेतत् । नन्वेते कार्यत्वसंनिवेशादिमत्त्वादयो हेतवः कार्यस्यानेककर्तृतामपि साधयन्तीति धर्मिस्वरूपविपरीतसाधनत्वाद्विरुद्धाः । तथाच मण्डनः

'संनिवेशादिमत्सर्वं बुद्धिमद्धेतुमद्यदि ।
प्रसिद्धसंनिवेशादेरेककारणता कुतः ॥
रथाद्यवयवा नानातक्षनिर्मापिता अपि ।
दृश्यन्ते जगति प्राय उपकार्योपकारकाः ॥'

इति । तदप्ययुक्तं रथादीनां कार्याणामनेकतक्षविरचितानामपि एकस्थपतीच्छानुवर्तनं विना निष्पत्त्यदर्शनात् । तदेवं कार्यत्वहेतुना जगतो बुद्धिमत्कर्तृपूर्वकत्वसिद्धौ योऽसौ तत्तद्वै-

चित्र्यसंपादिकेच्छाज्ञानक्रियाशक्तियुक्तः, कर्ता स इत्यस्मदादिकार्यविलक्षणक्षित्यादिकार्यविशेषजनककारणविशेषावगमो युक्तः । न चैतदप्रसिद्धं यस्माद्वैशिष्ट्यं कार्यवैशिष्ट्याद्दृष्टं लोकस्थितावपि, लोकव्यवहारेऽपि विशिष्टं कार्यं दृष्ट्वा विशिष्टमेव कारणमनुमीयते, यथा विचित्रभावनादिवस्तुचित्रलेपादिकलाकलापस्यामुख्यतां मध्यत्वमनुपमसौन्दर्यसंपदं च दृष्ट्वा, तत्तत्कर्तुरपि तद्गतवैलक्षण्याद्वैशिष्ट्यमवसीयते ॥

अतश्च

यद्यथा यादृशं याव-
त्कार्यं तत्कारणं तथा ।

यत् कार्यं धूमादि, यथेति येन प्रकारेण गिरिगुहागतत्वेन तदुत्सङ्गवर्तितया तदपरपार्श्ववर्तित्वेन चोपलब्धं, यादृशं च तार्णपार्णादिना स्वरूपेण विशिष्टं, यावत्परिमाणं तनुतररेखाकारमम्बुदनिवहबहलं वा, तत्कारणं वह्निलक्षणं, तथेति पर्वतोत्सङ्गस्थं वा तच्छिखरनिविष्टं वा तत्पश्चाद्भागगतं वा, तादृशं च ताव-

त्प्रमाणकं वाल्पत्वबहुत्वेन यथानुमीयते । एवं जगल्लक्षणकार्यस्य तत्तत्प्रकाराकारवैचित्र्यमुपलभ्य तत्तद्विशेषविषयनिरतिशयज्ञानक्रियाशक्तियुक्तं कारणमनुमीयते ॥

तच्च

नित्यं कालानवच्छेदा-
द्वैतत्यान्न प्रदेशगम् ॥ २ ॥
क्रमाक्रमसमुत्पत्तेः
क्रमाद्युत्पत्तिशक्तिमत् ।

यस्याभूत्वा भवनं भूत्वा चाभवनं, तस्य कालेनावच्छेदादनित्यत्वम् । यत्तु पूर्वापरकोटिद्वयविरहात् कालानवच्छिन्नं, तत् नित्यम् । किंच न तत्क्वचिदवस्थितं, अपितु वैतत्यान्महत्त्वाद्दिग्देशानवच्छिन्नत्वात् सर्वगं सर्वत्र तत्कार्योपलब्धेश्च विभु, तथा क्रमयौगपद्याभ्यां तनुकरणादिकार्यस्योत्पादनात् क्रमेण युगपच्चोत्पादिकया शक्त्या युक्तम् ॥

ननु जगत्सृष्टिस्थित्यादिका तत्क्रिया नाक-

रणिका क्रियात्वात् छिदिक्रियावत् अतस्त-
स्यापि करणेन भवितव्यमित्याह

तस्यास्ति करणं येन
दृष्टा नाकरणा कृतिः ॥ ३ ॥
अनागामि च तज्ज्ञेयं
कार्यस्यानादिसंस्थितेः ।

यस्मादकरणिका क्रिया न संभवति, अत-
स्तस्य भगवतः किमप्यवश्यं करणमस्ति । तच्च
कृत्यस्य सर्गादेरनादित्वेनावस्थानादनागामि
अनागन्तुकम् ॥

अथ किं तत्करणमित्युच्यते

करणं च न शक्त्यन्य-
च्छक्तिर्नाचेतना चितः ॥ ४ ॥

शक्तिरेवास्य विश्वेशितुः करणं तयैतत्क्रि-
यानिष्पादनात्, सा चेच्छादिरूपेति वक्ष्यामः ।
उक्तं च श्रीमत्किरणे

'इच्छैव करणं तस्य यथा सद्योगिनो मता ।'

इति । शक्तिश्च चेतनरूपा, नहि चित्स्वभाव-
स्याचिद्रूपा शक्तिर्भवति ॥ ४ ॥

**यच्चैतच्छक्त्यात्मकं करणं**
**विषयानियमादेकं**
**बोधे कृत्ये च तत्तथा ।**

यस्य ज्ञेयानां करणीयानां चानन्त्यं, तस्य करणैरप्यनन्तैर्भवितव्यम् । अपरिमितविषयं च परमेश्वरस्य ज्ञानं कृत्यं च । यद्वक्ष्यति

'......................शाङ्करम् । ( ५ पट० )
ज्ञानम्......................॥'

इति प्रक्रम्य

'तदेकं विषयानन्त्याद्भेदानन्त्यं प्रपद्यते ।
कर्तृत्वं तदभिन्नत्वात्तद्वदेवोपचारतः ॥' (५ पट०)

इति । तस्माद्विषयस्य ज्ञेयस्य करणीयस्य चानियतत्वादनवच्छिन्नत्वादेकमपि तच्छक्तिरूपं करणं बोधविषये कृत्यविषये च तथेत्यनवच्छिन्नमनन्तमेवेत्यर्थः ॥

अथ मतान्तरनिरनुभाषणेनेश्वरास्तित्वमेव द्रढयति

**कार्यं न स्थितिजन्मादि**
**बीजस्य प्रकृतेरणोः ॥ ५ ॥**
**पारिशेष्यान्महेशस्य**
**मुक्तस्य शिव एव सः ।**

ननु किमत्र करणापेक्षेणेश्वरेण कल्पितेन तस्मिन् कर्मनैरपेक्ष्येण कर्तृत्वानभ्युपगमात्, तच्चरितानि कर्माण्येव सृष्टिस्थित्यादिकारणतया भवन्त्विति जैमिनीयाः । यदाहुः

'कस्यचिद्धेतुमात्रस्य यद्यधिष्ठातृतेष्यते ।
कर्मभिः सर्वजीवानां तत्सिद्धेः सिद्धसाधनम् ॥' (श्लो०वा०)

इति । यद्वा बीजमिवाङ्कुरादीनां कलादिकार्याणामुपादानं मायैवान्यानपेक्षिणी सृष्ट्यादिकृद्भवतु, प्रकृतिरेव वाऽव्यक्ताख्या एतत्कर्तृत्वेनास्तु यां विना तस्येश्वरस्यापि तत्कार्यानिष्पत्तिरुपलभ्यते, क्षित्याद्यात्मना पारार्थ्यप्रवृत्ता अन्यानपेक्षिणी प्रकृतिरेव, अतः किमीश्वरेणेति कापिलाः । तथाहि

'यद्यथापरिणामैकस्वभावं तत्र तत्ततः ।
अन्यानपेक्षि बीजादिसामग्री यद्वदङ्कुरे ॥
महदादिविकारौघपरिणामस्वभावकम् ।
त्रिगुणात्म प्रधानं च तेन सांख्यमनीश्वरम् ॥' (ई० सि०२५)

इति । यदि वा

'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।' (ऋ० १०।९०।२)

इति अणोः पुरुषादेव विवर्ततया चिदचि-

ह्लक्षणविश्वप्रादुर्भावादि भविष्यति, किमीश्वरे-
णेति। तदसत् बहिर्बीजभूतानां कर्मणां माया-
दीनां चाचेतनानां बुद्धिमदधिष्ठितानां सृ-
ष्ट्यादि कृत्यमुपपन्नमित्युक्तत्वात्। प्रकृतेरप्यौ-
त्सुक्यनिवृत्त्यर्थं कार्येषु प्रवृत्तिर्नितरामयुक्ता
तस्या आचैतन्यादौत्सुक्यस्य च चेतनधर्मत्वात्।
पुरुषस्यापि परिणामित्वाद्यनेकदोषोपनिपातात्
स्वतन्त्रस्य चाभिरुचितहानेरनिष्टोपनिपातस्य
चानुपपत्तेरस्ववशत्वात्स्थितिजन्मप्रलयकर्तृत्व-
निरासे सति पारिशेष्यान्महेश्वरस्यैवैतत्स्थि-
तिजन्मादि कार्यमिति पारिशेष्यानुमानमनव-
द्यमिति गमकमेतत्। इदमिदानीं विविच्यते—
यदि तावत् परमेश्वरः कारुण्यात् संसारि-
जनोज्जिहीर्षया जगतां स्थितिजन्मादौ प्रव-
र्तते, तत्किमर्थं प्रत्युत सांसारिकेषु दुःखेषु
वराकानिमान् प्राणिनो नियोजयति, अथ
तस्यैवंविध एव स्वभावः, तन्मुक्तमपि जन्तुं
किं न संसारयतीत्याह 'मुक्तस्य शिव एव सः'
सत्यं, कारुण्यादेव भगवान् प्राणिनोऽनुग्रहीतुं
प्रवर्तते। यत्तु दुःखमोहादिना निरयाद्युपभोगेन

वा तान्संयोजयति, तन्निजकर्मानुरूप्यवशात् । नच कर्मापेक्षितया ईश्वरस्य स्वातन्त्र्यहानिरित्याशङ्कनीयं करणापेक्षया कर्तुः स्वातन्त्र्यव्याघातादर्शनात् भाण्डागारिकापेक्षस्य राज्ञः प्रसादादिदानवत् । यदुक्तं सिद्धगुरुभिः

'स्वतन्त्रान्याप्रयोज्यत्वं करणादिप्रयोक्तृता ।
कर्तुः स्वातन्त्र्यमेतद्धि न कर्माद्यनपेक्षिता ॥'

इति । नचाभुक्तस्य कर्मणः क्षयो भवति । तत्तद्योनिशरीरोपभोगभुक्तविचित्रकर्मक्षयतस्तत्साम्याद्वा अत्युत्कटमलपरिपाकवशप्रवृत्तशक्तिपातापसारितमलस्यावाप्तानुग्रहस्य जन्तोर्निरस्तसमस्तपाशत्वादाविर्भूतसर्वार्थतत्त्वकर्तृकस्य मुक्तात्मनः संसार्यताहेतोः पशुत्वस्याभावाच्छिवस्वरूप एव भगवान् भवति, नतु पशोरिवास्य कुत्सितभवभोगोपभोगहेतुर्भवतीति भावः ॥

पुनरपीश्वरकर्तृकत्वमेव जगतो घटयितुमनुमानं प्रतिसमाधातुमाक्षिपति

संबन्धाग्रहणे बाधा
मानस्याभ्येति कस्यचित् ॥ ६ ॥

नन्वस्य स्थितिजन्मादेः कार्यस्याविनाभाव-लक्षणसंबन्धो यदि कदाचिज्जगत्कर्त्रा सह केनचिदपि गृहीतः स्यात्तदैतदनुमानं सिध्येत् संबन्धस्यैव तु अग्रहणात् कथं नास्य बाधेति यदि कस्यचिन्मतं स्यात्, तदिदमप्यसौ प्रत्यनु-योज्य इत्याह

सा परस्यापि धूमोऽन्यो
गिरौ माहानसाद्यतः ।

सैषा बाधा सर्वस्याप्यनुमानवादिनः प्र-सक्ता । तथाहि महानसादिगतानां विशिष्ट-देशकालाकाराणामेव धूमाग्निव्यक्तीनां संबन्ध-ग्रहणे धूममात्राच्च पर्वतादौ वह्निमात्रानुमा-नमित्यगृहीतसंबन्धैव धूमव्यक्तिः कथं तथा-विधवह्निव्यक्तिं गमयेदिति संबन्धग्रहपर्यनु-योगः समानः । ततश्च

'यत्र स्यादुभयोर्दोषः परिहारश्च वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविनिश्चये ॥'

इति नैतदस्माकमेव चोद्यम् । अथ धूममात्र-स्यैव वह्निमात्राविनाभावलक्षणः संबन्धो गृ-हीतः, तदिहापि कार्यमात्रात् कर्तृमात्रानुमान-

मदुष्टम्। अन्यथा सर्वानुमानोच्छेद एव स्यात्। तदुक्तं

'साध्यसाधनसामान्येनाविनाभावनिश्चयात् ।
प्रवृत्तिरनुमानस्य तदभावस्तदन्यथा ॥'

इति । इत्थं च विचित्रतत्तत्कर्माशयाधिवासितभोक्तृभोगतत्साधनतदुपादानादिविशेषज्ञः कर्ता अनुमानान्तरेणानुमीयत इति न कश्चिद्दोषः। तदिदमुक्तं तत्रभवद्बृहस्पतिपादैः

'भवभोक्तृभोगसाधनतदुपादानादि यो विजानाति ।
तमृते भवेन्नहीदं पुंस्कर्माशयविपाकज्ञम् ॥'

इति ॥

अस्तु तर्हि ईश्वरः कर्ता, सतु न तावदशरीरः प्रत्येतव्यः

'कार्यं शरीरयुक्तेन कर्त्रा व्याप्तं सदैव यत् ।'

इत्यादिना देहविरहिणः कर्तृत्वायोगस्योक्तत्वात्। तथाहि

लोके वपुष्मतो दृष्टं
कृत्यं

घटपटादि कार्यं शरीरवतैव क्रियमाणं दृष्टं नाशरीरेणेति ॥

किंचातः

सोऽप्यस्मदादिवत् ॥ ७ ॥

एवं च सति अस्मदादिवत्क्लेशादियुक्तोऽसर्वज्ञः परिमितशक्तिर्देशाद्यवच्छिन्नः सोऽपीश्वरः शरीरित्वात्प्राप्नोतीति पूर्वः पक्षः ॥ ७ ॥

सिद्धान्तस्तु

मूलाद्यसंभवाच्छाक्तं
वपुर्नो तादृशं प्रभोः ।

अशरीरस्यापि तावत् स्वदेहस्पन्दादौ कर्तृत्वं दृष्टमिति । 'कार्यं शरीरयुक्तेन कर्त्रा व्याप्तम्' इत्युक्तमभ्युपगम्यापि ब्रूमः शरीरवत्त्वेऽपि भगवतो न प्रागुक्तदोषप्रसङ्गः । कुत इत्याह मूलाद्यसंभवादिति मूलं मलः सर्वानर्थमूलत्वात्, अविद्यावृतिरुग्ग्लानिपापमूलक्षयादिभिः पर्यायैर्वक्ष्यमाणत्वाच्च, आदिग्रहणात्कर्माणि रोधशक्तिश्च, तदसंभवात् । नहि परमेश्वरस्य मलकर्मादि पाशजालं संभवति यन्निमित्तं प्राकृतं वपुः कल्प्यते, अपितु शाक्तमिति शक्तिस्वरूपैः सद्योजातादिभिः पञ्चभिर्मन्त्रैः स्वेच्छा-

विनिर्मितमपरिमितसामर्थ्यमदिग्देशकालाकारव्यवच्छिन्नमनुपममहिम तच्छरीरं, नत्वस्मदादिशरीरसदृशम् ॥

अत एव हि

तद्वपुः पञ्चभिर्मन्त्रैः
पञ्चकृत्योपयोगिभिः ॥ ८ ॥
ईशतत्पुरुषाघोर-
वामाजैर्मस्तकादिकम् ।

यथाक्रममनुग्रहतिरोभावादानरक्षणोत्पत्तिलक्षणकृत्यपञ्चकेऽवश्यमुपयोगो येषां तैरीशानादिभिः पञ्चभिर्मन्त्रैस्तत् मूर्धादि वपुः 'देवस्योच्यते' इत्यध्याहारः। वरैः पुष्णाति ध्यायिनः इति वपुःशब्दस्यान्वर्थता, भक्तानुग्रहणाय तत्तदाकारग्रहणस्यागमेषूपदिष्टत्वात् । तथाचोक्तं श्रीमत्पौष्करे

'साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम् ।'

इति ॥

अथ कथं भगवत ईशानमूर्धत्वमित्याह

ईष्टे येन जगत्सर्वं
गुणेनोपरिवर्तिना ॥ ९ ॥
स मूर्धसमदेशत्वा-
न्मूर्धा नावयवस्तनोः ।

येन गुणेन मन्त्रेण सर्वस्रोतोऽनुस्रोतसा-मूर्ध्वस्थितत्वात् सर्वानुग्रहहेतुत्वाद्वा उपरिव-र्तिना जगच्चिदचिदात्मकं विश्वमीष्टे, स उत्त-माङ्गवत्सर्वोर्ध्वस्थितत्वान्मूर्धेव मूर्धा, न परमा-र्थतो देहावयवः ॥

तत्पुरुषवक्त्रं व्याचष्टे

तस्य तस्य तनुर्या पू-
स्तस्यामुषति येन सः ॥ १० ॥
तत्राणाद्व्यञ्जनाच्चापि
स तत्पुरुषवक्त्रकः ।

तस्य तस्य अमरनरादेर्या पूः पुरी तनु-स्तस्यां पुरि यजमानस्वरूपेणाधिष्ठानभावेनो-षितस्तत्पुरुषः । तदुक्तं

'स्वात्मैवायं वसति सकलप्राणिनामीश्वरोऽन्तः ।'

(ई० सि० ५६)

इति । तत्पुरुष इति यस्माद्व्यनक्ति ज्ञानक्रिये, त्रायते जन्मादिभयात्ततस्तत्पुरुषवक्त्रः

'व्यञ्जनत्राणरूपत्वाद्वक्त्रमित्यभिधीयते ।'

इति श्रुतेः ॥

अघोरहृदयत्वं वक्तुमाह

हृदयं बोधपर्यायः
सोऽस्य घोरः शिवो यतः ॥११॥
परिग्रहस्य घोरत्वा-
द्घोरोक्तिरुपचारतः ।

हृदयमाशयो बोध इति पर्यायः । शिवो बोधो यस्माद्भगवतस्तस्मादघोरहृदयः । ननु घोरमश्रेयोरूपं यदुच्यते तद्घोररूपता कथं देवस्येत्याह परिग्रहस्य घोरत्वादिति । येयं परमेश्वरस्य घोररूपोक्तिः सा न वास्तवी, किंतु परिग्रहस्य स्वशक्त्युत्तेजितसामर्थ्यस्याशुद्धाध्वा-

धिकारिनिकुरम्बस्य घोरत्वाद्घोरशक्तिर्देव उपचारादुच्यते । तथाचोक्तं

'विषयेष्वेव संलीनानधोऽधः पातयन्त्यणून् ।
रुद्राणून्याः समालिङ्ग्य घोरतर्योऽपरास्तु ताः ॥'

(मा० वि० ३।३१)

इति ॥

वामदेवगुह्यत्वमभिधत्ते

वामस्त्रिवर्गवामत्वा-
द्रहस्यश्च स्वभावतः ॥ १२ ॥
वामं धाम परं गुह्यं
यस्यासौ वामगुह्यकः ।

धर्मार्थकामलक्षणेन त्रिवर्गेण प्रलोभ्य वमति अधो निक्षिपतीति वामः। स्वभावेन रहस्यो गुह्यो भावः कथ्यते । इत्थं पृथगनयोः पदयोरर्थं प्रदर्श्य विग्रहं करोति वामं धामेति। दिवेर्धातोर्द्युत्यर्थत्वाद्देवशब्देन तेजोऽभिमतम्। तेन वाममधस्तनेऽध्वनि वमनशीलं यत्तेजस्तद्गुह्यमप्रकटमस्येति वामदेवगुह्यः परमेश्वरः॥

सद्योजातमूर्तित्वं निरूपयति

सद्योऽणूनां मूर्तयः संभवन्ति
यस्येच्छातस्तेन सद्योऽभिधानः ।
सद्यो मूर्तीर्योगिनां वा विधत्ते
सद्योमूर्तिः कृत्यशैघ्र्यान्न मूर्तेः ॥

पत्युरिच्छया हि कर्मप्रक्षयाय क्षिप्रमेवात्मनां तास्ता मूर्तयो जाता इति सद्योजातमूर्तिर्देवः । यद्वक्ष्यति दीक्षाप्रकरणे

'सद्येन जनयेत्सद्यो नानानिष्पन्नविग्रहम् ।'

इति । यद्वा योगिनां तत्तत्समाधिभाजां सद्यस्तत्क्षणं मूर्तीर्विधत्ते प्रोक्तवन्मन्त्रमयस्वमूर्तिसदृशीं तनुं संपादयतीति अचिरात्स्वसमताभिव्यञ्जकत्वात्सद्योमूर्तित्वं, नतु शीघ्रसंजातस्वदेहत्वादित्यर्थः ॥ १३ ॥

एतदेव द्रढयति

इत्थं शक्तिः कुर्वती देहकृत्यं
देहाभावादुच्यते देहशब्दैः ।

तस्या भेदा येऽपि वामादयः स्यु-
स्तेऽपि प्रोक्ताः कृत्यभेदेन सद्भिः॥

परमार्थतः परमेश्वरस्याशरीरत्वाच्छक्तिरेव देहकार्यं कुर्वती देहाख्ययोक्ता । तस्याश्चैकस्या अपि कृत्यभेदाद्वामादिभेदभिन्नत्वम् । यथा वह्निशक्तेर्दाह्यप्रकाश्यार्थविषये दाहप्रकाशप्रकरणाद्गौणमनेकत्वं वस्तुत एकत्वात्तस्याः ॥ १४॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ तृतीयं प्रकरणम् ॥ ३ ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

### ( चतुर्थः पटलः )

तदेवमन्वयव्यतिरेकाभ्यां पतिपदार्थं प्रसाध्य, तत्स्वरूपनिरूपणाय मूलसूत्रोपक्रान्तं सर्वकृत्पदं तावत्प्रपञ्चयितुं पटलान्तरमारभते । तस्य चानन्तरपटलान्तसूचितकृत्यनिरूपणार्थत्वाद्विद्यापादाख्यप्रकरणानुषङ्गाच्च पाटलिकप्राकरणिकौ संबन्धौ ज्ञेयौ । पदार्थादिसंबन्धास्तु प्राग्वदनुसन्धेयाः ।

स इत्थंविग्रहोऽनेन
करणेनाहतौजसा ।
करोति सर्वदा कृत्यं
यदा यदुपपद्यते ॥ १ ॥

इत्थमित्यनेनोक्तप्रकारेण मन्त्रात्मको वि-

ग्रहो यस्य स भगवानित्थंविग्रहः। अनेनेति

'करणं च न शक्त्यन्यत्················।' (१।३।४)

इति प्रागुक्तेनात्मना अप्रतिहतसामर्थ्येन करणेन स्थित्यादि कार्यजातं सर्वकालं सर्वं निर्वर्तयति। न परं युगपत्करोति, यावद्यदा यदुपपद्यते, तत्तदा करोति क्रमेणापि सर्वं कार्यं करोतीत्यर्थः। तदुक्तं प्राक्

'क्रमाक्रमसमुत्पत्तेः क्रमाद्युत्पत्तिशक्तिमत्।' (१।३।२)

इति ॥ १ ॥

अथ प्रथमतः परमेश्वरः किं करोतीत्याह

तत्रादौ केवलाणूनां
योग्यानां कुरुतेऽष्टकम्।
वामादिशक्तिभिर्युक्तं
सप्तकोटिपरिच्छदम् ॥ २ ॥

तत्रेत्येवंस्थिते सति इत्यर्थः। एकस्या एव शक्तेर्वामादिकृत्यवशाद्वामादिभेदभिन्नत्वमित्युक्तम्। सा च शक्तिः सर्वज्ञानक्रियारूपा शिववत् सर्वाणूनां विद्यत एव, तेषां चानाद्यविद्यारुद्धत्वाच्छिवानुग्रहं विना न तत्समाना

भवतीति प्रक्षीणकार्ममायीयबन्धानां विज्ञानकेवलानामञ्जनपरिपाकाद्यनुसारेण तत्पद्योग्यानामष्टकं मन्त्रकोटिसप्तकपरिवारं वामादिशक्तिनवकयुक्तं च करोति ॥ २ ॥

अन्येषामपि सप्तकोटिसंख्यातानां मन्त्राणामनन्तेशाद्य एवाष्टावीशितार इति वक्तुमारभते

तेषामनन्तः सूक्ष्मश्च
तथा चैव शिवोत्तमः ।
एकनेत्रैकरुद्रौ च
त्रिमूर्तिश्चामितद्युतिः ॥ ३ ॥
श्रीकण्ठश्च शिखण्डी च
राजराजेश्वरेश्वराः ।

राजानो लोकेशा इन्द्रादयः, तेषां राजानः शतरुद्राः, तदीश्वराणां मण्डलिप्रभृतीनामप्येत ईश्वराः प्रभवः विद्यामहेश्वरा इति यावत् ॥

एते च

ईषदप्राप्तयोगत्वा-
न्नियोज्याः परमेष्ठिनः ॥ ४ ॥

अधिकारमलांशावशेषात्किंचिदनवाप्तपरमेश्वरसाम्या इत्यस्यैते प्रेर्याः ॥ ४ ॥

अथैषामष्टानामपि सर्वज्ञत्वसर्वकर्तृत्वसंभवात्किंस्विदभिन्नरूपत्वमुत कश्चिद्विशेष इत्याह

सर्वज्ञत्वादियोगेऽपि
नियोज्यत्वं मलांशतः ।
परस्परं विशिष्यन्ते
मन्त्राश्चैवमधःस्थिताः ॥ ५ ॥

यद्यपि सर्वे सर्वार्थदृक्क्रियाः, तथाप्येकैकस्य स्वस्वाधोवर्तिनो नियोज्या इति प्रेर्यतालक्षणमलांशावशेषादधोवस्थितानामेषामूर्ध्वस्थमवेक्ष्य कलया कर्तृत्वस्य न्यूनत्वमिति परस्परविशेषः । तदुक्तं

'यो हि यस्माद्गुणोत्कृष्टः स तस्मादूर्ध्वमिष्यते ।'

( मा० वि० २।६० )

इति । न केवलमेत एव विशिष्यन्ते यावत्तदधोवर्तिनो मन्त्रा अप्येवमेव परस्परविशेषभाजः ॥ ५ ॥

तानेव मन्त्रान्विशिनष्टि

ते च मन्त्रेश्वरव्यक्त-
शिवशक्तिप्रचोदिताः ।
कुर्वन्त्यनुग्रहं पुंसां
यदा येषां स युज्यते ॥ ६ ॥

ते च मन्त्राः परापरमन्त्रेश्वरव्यक्तया शिव-शक्त्या व्यापारिता योग्यतानुरूप्येण कदाचित्केषांचिदनुग्रहं कुर्वन्ति, नतु योग्यतानपेक्षमतिप्रसङ्गात् ॥ ६ ॥

प्रयोक्तृदेहसापेक्षं
तदर्धमखिलेऽध्वनि ।
कृत्वाधिकारं स्थित्यन्ते
शिवं विशति सेश्वरम् ॥ ७ ॥

तेषां सप्तकोटिसंख्यातानां मन्त्राणामर्धं प्रयोक्तृणामनुग्रहीतृणां देहं शरीरमाश्रयत्वेनापेक्षमाणमीश्वरमपेक्षत इति तत्सापेक्षमाचार्याधिकरणेश्वरापेक्षमखिले मायीयेऽध्वनि स्वमधिकारमनुग्राह्यानुग्रहलक्षणं निर्वर्त्य, स्थिति-

कालस्यान्ते मायीयस्याध्वनोऽप्युपरमसमये, सेश्वरमिति मन्त्रेश्वरैः सहितं शिवसायुज्यं गच्छति ॥ ७ ॥

अपरस्यार्धस्य का वार्तेत्याह

विनाधिकरणेनान्य-
त्प्रधानविकृतेरधः ।
कृत्वाधिकारमीशेष्ट-
मपैति स्वाध्वसंहृतौ ॥ ८ ॥

अन्यदपरमर्धमीशेष्टमिति यत्र यत्र परमेश्वरस्यानुग्रहेच्छा तत्र तत्र तदिच्छयैव, विनाधिकरणेनेत्याचार्यलक्षणमधिकरणमनपेक्ष्यैव प्रधाना चासौ विकृतिश्चेति प्रधानविकृतिः शुद्धविद्या, अस्या अधः सर्वत्र मायीये चाध्वनि स्वमधिकारं कृत्वा स्वस्याध्वनोऽनुग्रहमार्गस्य संहृतौ समाप्तौ अपैति अपवृज्यते । तदुक्तं तत्रभवद्भिः सद्योज्योतिःपादैः

'जगति कृते तत्रार्धं मन्त्राणां शिवसमाहृतान्पुंसः ।
अनुगृह्य याति हि विना दैशिकमूर्तिं प्रयुक्तमीशेन ॥'
(तत्त्वसं० ३३)

इति ॥ ८ ॥

इत्थं मन्त्रानुक्त्वा मन्त्रेश्वरान्वक्तुमाह

ततोऽनन्ताद्यभिव्यक्तः
पतीनां ग्रन्थितत्त्वतः ।
कलाद्यारब्धदेहानां
करोत्यष्टादशं शतम् ॥ ९ ॥

'तच्च सात्मकमाक्रम्य विश्वमायावतिष्ठते ।'

इति अन्तर्विश्रान्ताणुसंघातं मायातत्त्वं वक्ष्यमाणं, तस्माद्ग्रन्थितत्त्वतस्तद्गर्भाधिकारिणां कलाद्यारब्धशरीराणां मण्डल्यादीनां पतीनामष्टादशाधिकं शतमनन्तेशाद्यभिव्यक्तः परमेश्वरः करोति कलाद्यारब्धदेहत्वमेषां करोतीत्यर्थः । ननु च

'अष्टादशाधिकं चान्यच्छतं मायाधिकारिणाम् ।
विद्येश्वराणाम् ........................ ॥'

इत्यादिना साक्षात्परमेश्वरानुगृहीतत्वमेषामुक्तम्, इह त्वनन्ताद्यभिव्यक्तस्य भगवतस्तत्करणमुच्यत इति विरोधः । नैवं यतोऽनन्तादीनामेव कलादियोगकरणे कर्तृत्वं, ननु पर-

मेश्वरस्य

'शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः ।'

इति श्रुतेः । स तु कलादियोगिनो भोगभुजस्तान् साक्षादनुगृह्णातीति न कश्चिद्दोषः ॥९॥

तेऽप्यन्येषां विनियोक्तार इत्याह

तानप्याविश्य भगवा-
न्साञ्जनान् भुवनाधिपान् ।
येभ्यः सर्वमिदं येषां
शक्तिः कर्मनिबन्धना ॥ १० ॥

तानपि मण्डलिप्रभृतीनष्टावधिष्ठाय स परमेश्वरोऽन्यानपि ब्रह्मप्रभृतीन् समलान्भुवनेशानुत्तेजितदृक्क्रियाशक्तीन् करोतीति पूर्वेणैव संबन्धः । किंविधानित्याह—येभ्यः सर्वमिदं जगत्स्थावरजङ्गमलक्षणमाविर्भवतीति शेषः । येषां शक्तिः कर्मनिबन्धना कर्मपाशो येषामुपरोधकत्वान्न निवृत्तः, सकलानामेवैषां परमेश्वरादनुग्रहो यतः ॥ १० ॥

न परमेतानेव करोति, यावत्

प्रणेतॄन्पशुशास्त्राणां
पशूंस्तदनुवर्तकान् ।
स्वसाध्यकारकोपेता-
न्कालधामावधिस्थितान् ॥११॥

पशुशास्त्राणामार्हतसांख्यपाञ्चरात्रादीनां प्रणेतॄनर्हत्कपिलप्रभृतींस्तदनुष्ठातॄंश्च पशून् स्वसाध्येन तत्तच्छास्त्रोपदिष्टेन फलेन तत्साधनहेतुभिः कारकैश्च युक्तान् कालाग्निभुवनान्तं यावत्करोतीति पूर्वेणैव संबन्धः ॥ ११ ॥

अथैतान्सृष्ट्वा देवः किं करोतीत्याह

स्थितौ सकारकानेता-
न्समाक्रम्य स्वतेजसा ।
युनक्ति स्वार्थसिद्ध्यर्थं
भूतैरनभिलक्षितः ॥ १२ ॥

एतान् कारकैर्भोगसाधनैस्तत्त्वभावभुवनादिभिर्युक्तान्,स्वतेजसा निजेच्छाशक्त्या, सम्यगधिष्ठाय स्वार्थसिद्ध्यर्थमित्यात्मीयस्य व्यापा-

रस्य संपत्तये, यद्वा स्वैरात्मभिरर्थ्यंत इत्यर्थो भोगापवर्गलक्षणः पुरुषार्थः तस्य निष्पत्त्यर्थं, नियोजयति, नतून्मत्तवत्, नाप्यप्रयोजनं प्रयोजनानुद्देशेन मन्दस्याप्यप्रवृत्तेः, नच क्रीडार्थं रागादिविरहिणस्तदसंभवात्, नाप्यात्मनिमित्तं परिपूर्णत्वात्। भूतैः प्राणिभिरविद्यावशादविदिततद्वृक्क्रियः ॥ १२ ॥

तदियता सृष्टिस्थिती उक्त्वा संहारं वक्तुमाह

भोगसाधनमाक्षिप्य
  कृत्वा कारणसंश्रयम्
तच्च सात्मकमाक्रम्य
  विश्रमायावतिष्ठते ॥ १३ ॥
भविनां भवखिन्नानां
  सर्वभूतहितो यतः।

स्थित्यन्ते भोगसाधनं तनुकरणभुवनादि उपसंहृत्य, कारणे मायाख्ये लीनं कृत्वा, तच्च मायाख्यं कारणमन्तर्निहितात्मव्रातमधिष्ठाय संसारिणां भवाध्वभ्रमणश्रान्तानां विश्रमार्थम-

वतिष्ठते निरुद्धव्यापारांस्तांस्तान्करोतीत्यर्थः । कुत इत्याह सर्वभूतहितो यतः, यस्मात् सर्वेषां भूतानां हिताय प्रवृत्तः परमेश्वरः खेदापनोदाय विश्रान्तिं स्वापलक्षणामेषां करोति ॥

ततस्तु

स्वापावसानमासाद्य
पुनः प्राग्वत्प्रवर्तते ॥ १४ ॥

वक्ष्यमाणकालपरिमाणस्य स्वापस्यान्ते भूयः पूर्ववदहर्मुखे परमेश्वरश्चेष्टते ॥ १४ ॥

तत्स्वापेऽपि क्रियादिशक्तयस्तत्तत्कार्यनिष्पादनोद्युक्ता भवन्तीत्याह

स्वापेऽप्यास्ते बोधयन्बोधयोग्यान्
रोध्यान्रुन्धन्पाचयन्कर्मिकर्म ।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
पश्यन्सर्वं यद्यथा वस्तुजातम् ॥ १५

जाग्रदवस्थायामिव स्वापावस्थायामपि मलपरिपाकतारतम्यापेक्षया बोधनार्हान् बोधयन्, रोधनार्हान् रोधनशक्त्या रुन्धन्, कर्मिणां

कर्माणि परिणामयन् , मायाशक्तीश्च प्रसवा-
भिमुखीः कुर्वन्, सर्वं चिदचित्तत्त्वभावभूतभु-
वनात्मकं यथावदवलोकयन्नास्ते। यद्यथेति न-
त्वस्मदादिवत् अयथावस्त्ववभासोऽप्यस्य भ-
वतीति वक्ष्यामः । तदियता जगत्सृष्टिस्थिति-
ध्वंसलक्षणं कृत्यत्रयमिहोक्तमिति प्रकरणोप-
संहारः ॥ १५ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ चतुर्थं प्रकरणम् ॥ ४ ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

( पञ्चमः पटलः )

अथ मूलसूत्रोपात्तसर्वकृत्यपदाक्षिप्तपतिपदार्थस्यानुग्रहतिरोभावाख्यकर्मद्वयमवशिष्टमभिधातुं प्रकरणान्तरम् । अस्य च सौत्रः पादार्थिकश्च संबन्धौ स्पष्टौ, प्राकरणिकस्तु विद्यापादाख्येन प्रकरणेन ज्ञेयः, वाक्यात्मकोऽपि 'जगत्सृष्टिस्थितिध्वंसतिरोभावविमुक्तयः । कृत्यम्' (१।२।३) इत्यादिभिर्वाक्यैः, पाटलिकः पुनः 'बोधयन्बोधयोग्यान्' इति पूर्वपटल एवोपक्रान्तः ।

तमःशक्त्यधिकारस्य
निवृत्तेस्तत्परिच्युतौ ।
व्यनक्ति दृक्क्रियानन्त्यं
जगद्बन्धुरणोः शिवः ॥ १ ॥

तमसो मलस्य शक्तेश्च भगवत्संबन्धिन्या वामाख्याया योऽसावधिकारो न्यग्भावनव्यापृतत्वं, तस्य निवृत्तेर्विरामात् यासौ परिच्युतिः कैवल्याभिमुखीभावः, तथाचोक्तं श्रीमत्स्वायंभुवे

'क्षीणे तस्मिन्यथा सा स्यात्परं निःश्रेयसं प्रति ।'

इति, तस्यां तत्परिच्युतौ सत्यां जगदुद्धरणप्रवणः परमेश्वरो दृक्क्रियानन्त्यमणोरात्मनः प्रकटीकरोति । सत्योरेवानन्तयोर्दृक्क्रिययोर्मलावच्छन्नत्वादावृतानन्त्ययोस्तत्परिणतेरावरणापगमादभिव्यक्तिः क्रियते, नत्वपूर्वोत्पाद इत्युक्तं, वक्ष्यामश्च सत्कार्यवादे ॥ १ ॥

यान्विमोचयति स्वापे
शिवाः सद्यो भवन्ति ते ।
संहृतौ वा समुद्भूता-
वणवः पतयोऽथवा ॥ २ ॥

स्वापावस्थितान् यान्परमेश्वरोऽनुगृह्णाति, ते तु तत्काल एव शिवाः संपद्यन्ते, नत्वधिकारिणो भवन्ति तेषां मलांशानवशेषतोऽप्रे-

र्यत्वेन शिवत्वयोगात् तदानीं चाधिकारिणामनुपयोगात् । किंच संहारे सृष्टौ वा यान्विमोचयति, तेऽपि सद्य एव शिवाः संपद्यन्ते, न व्यतिरेकेण । अथवेति अनयोः सृष्टिसंहारकालयोरञ्जनपरिपाकवैलक्षण्यतस्तत्क्षणं शिवत्वव्यक्त्या निरधिकारमूर्तिभाजः साधिकाराः पतित्वयोगिनो वा आत्मानो भवन्तीत्यर्थः । तत्र संहारे येषामधिकारवाननुग्रहस्ते तदानीं रुद्राणवः सृष्टौ त्वधिकारिणो भवितारः, सर्गारम्भे तु साधिकारानुग्रहानुगृहीताः पतय इति परापरविद्येश्वराद्यधिकारभाजो भवन्तीति । अथ सृष्टिसंहारकालयोरश्रुतमपि कथमनुग्राह्याणां शिवत्वं लभ्यत इति चेत् लभ्यत एव मलपरिपाकस्य परमेश्वरानुग्रहस्य चानियतकालत्वात् ॥ २ ॥

अथैवं सर्गसंहारस्वापकालेषु अनुगृहीतानां मुक्तिविशेषमुक्त्वा, स्थितिकालानुगृहीतानां तद्विशेषमाह

रुद्रमन्त्रपतीशान-

पदभाजो भवन्ति ते ।

स्थितौ याननुगृह्णाति
गुरुमास्थाय चिद्गतः ॥ ३ ॥

गुर्वधिकरणः परमेश्वरः स्थितिकाले चिद्गत इति तदनुध्यानवशात्परापरनिःश्रेयसविषयया प्रशस्यया चिता युक्तान्याननूननुगृह्णाति, ते मन्दतीव्रादिशक्तिसंपातवैलक्षण्यात्पञ्चाष्टकादिरुद्राणां, सप्तकोटिसंख्यातानां मन्त्राणां, तत्पतीनां च विद्येश्वराणामीशानस्य चेश्वरसदाशिवान्तलक्षणस्य संबन्धि पदं भजन्त इति तत्पदभाजस्तत्सालोक्यादिपदयोगिनो भवन्तीत्यर्थः ॥ ३ ॥

ननु शक्तिपातविशेषात्तत्तत्पदभाक्त्वं चेत्तर्हि तद्विशेषः कथं ज्ञेयः इत्याह

येषां शरीरिणां शक्तिः
पतत्यपि निवृत्तये ।
तेषां तल्लिङ्गमौत्सुक्यं
मुक्तौ द्वेषो भवस्थितौ ॥ ४ ॥
भक्तिश्च शिवभक्तेषु
श्रद्धा तच्छासके विधौ ।

अनेनानुमितिः शिष्ट-
हेतोः स्थूलधियामपि ॥ ५ ॥

अशरीरिणां तावद्गुरुभिः शक्तिपातस्य दुर्लक्षत्वाच्छरीरवतां येषां पारमेश्वरी शक्तिरपुनराविर्भावाय पतति, तेषां तत्पाते मुक्त्युत्कण्ठा, संसारद्वेषः, परमेश्वरभक्तिपरेषु भक्तिः, तच्छासके शास्त्रे श्रद्धा चेति लिङ्गं चिह्नम् । अनेनैव चिह्नेनाप्रकर्षवता अवशिष्टस्य संसारस्थितिहेतोः पाशजालस्यासूक्ष्मबुद्धीनामप्यनुमानम् । पूर्वोक्तानां चिह्नानामेव मन्दत्वे सति पशोः पाशशैथिल्यमान्द्यं मन्दमतयोऽप्यनुमिन्वन्ति इति भावः ॥ ५ ॥

ननु किमनेनात्यन्तापूर्वेण शक्तिपातनिश्चयेन, सकलदर्शनप्रसिद्धं तावदिदं कैवल्यप्राप्तिकारणं लिङ्गत्वेन किं न निश्चीयते । यदुक्तं

'न हृष्यत्युपकारेण नापकारेण कुप्यति ।
यः समः सर्वभूतेषु जीवन्मुक्तः स इष्यते ॥'

इति । तत्राह

पशुदृग्योगसिद्धानां
कर्मव्यक्तिद्वयं समम् ।

ज्येष्ठादिफलयोग्यानां
साधिकारासु मुक्तिषु ॥ ६ ॥
उपायादरवैशिष्ट्या-
न्मृग्यते तत्रयं पुनः ।

पशुदृग्भिः पाशवैर्ज्ञानैस्तदुक्तेन च पतञ्ज-लिप्रभृतिप्रणीतेन योगेन ये सिद्धाः सत्त्वगुण-प्रसादान्माध्यस्थ्यं प्राप्तास्तेषां यत् कर्मभ्यामुप-कारापकाररूपाभ्यां चेष्टाभ्यां प्रसादक्रोधलक्षणं व्यक्तिद्वयं सममिति नापकारिणि क्रोधव्यक्ति-र्नाप्युपकारिणि प्रीतिव्यक्तिर्माध्यस्थ्यादेवैतद्भ-वतु, नास्माभिर्निषिध्यते । इह पुनरयं विशेषः यदधिकारवतीषु मुक्तिषु विषयेषूपायस्य दी-क्षादेः

'लोकधर्ममयी दीक्षा शिवधर्ममयी तथा ।'

इत्यादिना वक्ष्यमाणाद्वैशिष्ट्यादादरस्य च तत्त-त्पदप्राप्तिप्रीतिश्रद्धात्मनो वैलक्षण्यात्, यथोक्तं श्रीमत्सूक्ष्मस्वायम्भुवे

'यो यत्राभिलषेद्भोगान्स तत्रैव नियोजितः ।
सिद्धिभाङ्मन्त्रसामर्थ्यात्·········॥'

इति, तस्मादुपायादरवैलक्षण्यान्मन्त्रमहेश्वरा-
दिपदप्राप्तिलक्षणज्येष्ठफलयोग्यतां मन्त्रेश्वरप-
दशक्त्यात्मकफलार्हत्वं पञ्चाष्टकाद्यपराधिकारि-
पदयोजनायोग्यतां च निश्चेतुं कर्मव्यक्तित्रयं
मृग्यते अन्विष्यते । भक्तिश्रद्धाभिव्यक्तितार-
तम्यादुत्कृष्टमध्यमापकृष्टरूपसाधिकारापवर्ग-
पदभाज इत्यनुग्राह्या भवन्तीत्याशयः ॥

यच्चैतत्साधिकारमुक्तित्रयं दर्शितम्, ततः

द्वयोर्व्यक्तिकरः कश्चि-
च्च्युतिसिद्धिविलक्षितः ॥ ७ ॥

मध्यमापकृष्टयोर्मुक्तयोरुपर्यधोवर्तिनः पदस्य
प्राप्यतया स्वस्मात् पदात् च्युतिसंभवेन च क-
श्चिद्व्यक्तिकरोऽन्तरायः, नत्वनन्तरमेवापवर्गस्य
प्राप्तिः। तृतीयस्यां तु तत्पदाधिकारसमाप्तिस-
मनन्तरेणैव तल्लाभः ॥ ७ ॥

अथ किंनिमित्तमेतच्चिह्नवैचित्र्यं यद्वशा-
त्रित्वं साधिकाराया मुक्तेरित्याह

ईषदर्थनिवृत्ते तु
रोधकत्वे तमःपतेः ।

भवन्त्येतानि लिङ्गानि
किंचिच्छिष्टे च देहिनाम् ॥ ८॥

तमःपतेः क्रियादृङ्निरोद्धुर्वामदेवनाथस्य यद्रोधकत्वं, तस्मिन् किंचिन्निवृत्ते मनागवशिष्टे च सति एतच्चिह्नतारतम्यं शरीरिणां भवति ॥

अत एव

योग्यतात्रयमप्येत-
त्समतीत्य महेश्वरः ।
स्वापेऽणुमनुगृह्णाति
साधिकारमिदं यतः ॥ ९ ॥

एतद्योग्यतात्रयमनपेक्ष्यैव स्वापेऽणुमनुगृह्णाति, अणुमिति जातावेकवचनम्, योग्यतावैचित्र्येणानुग्रहवैचित्र्यमणूनां तदानीं न करोतीति भावः । अत्रैव हेतुमाह 'साधिकारमिदं यतः' यस्माद्योग्यतात्रयमधिकारापेक्षम् । नच तदानीमधिकारोपयोगः, तस्मान्नापेक्षते ॥ ९ ॥

सर्गमूले तृतीयायां
स्वापवद्भूतसंहृतौ ।

भविष्यति सर्गारम्भे संहारोपान्ते वक्ष्यमाणलक्षणायां तृतीयस्यां च भूतसंहृतौ याननुगृह्णाति, ते शिवाः संपद्यन्ते स्वापावस्थानुगृहीताणुवत् ॥

स्वापेऽणुमनुगृह्णातीति यत्प्रागुक्तं, ततोऽणुशब्दं लक्षयितुमाह

स यद्यपास्य क्रियते
तद्विधो योऽणुरुच्यते ॥१०॥

स इत्यनन्तरोक्तः सर्गादौ तृतीये च भूतसंहारे स्वापे च योऽनुग्राह्यः । यो यद्यपास्यापनीय तादृग्विधः क्रियते अभिव्यक्तशिवभावः संपद्यते, सोऽणुशब्दवाच्यो ज्ञेयः अणुः सन्नपवृज्यत इति यावत् ॥ १० ॥

तदेवं 'बोधयन्बोधयोग्यान्' इति यत्प्रागुक्तं, तद्दृक्क्रियानन्त्यव्यक्त्या प्रदर्शितम् । यदपि 'रोध्यान्रुन्धन्' इत्यादि सूचितं, तत् 'यान्विमोचयति स्वापे' इत्यनेन केषांचिदेव तथाविधानुग्रहभाक्त्वे सति अन्येषामर्थाक्षिप्तो रोध इति कृत्वा न विपञ्चितम् । इदानीं तु 'पाचयन्कर्मिकर्म' इत्युक्तं निर्वर्णयितुमाह

तथा बीजं शरीरादेः
पाचयत्यानिवेशनात् ।

भगवतः शक्तयः सर्वकार्येषु प्रसृताः । ताभिः शरीरेन्द्रियजात्यायुर्भोगकारणं कर्म देहभाजां तत्स्वापे पाचयति फलदानोन्मुखमापादयति ॥

यस्मात्

न योग्यताङ्गमभज-
त्सद्यः स्यादौषधादिवत् ॥११॥

योग्यताया अर्हत्वस्याङ्गं संपादकं पाकाख्यं संस्कारमभजदनासेव्यमानं तत् कर्म सद्यस्तत्क्षणं हरीतक्याद्यौषधमिव न स्यान्न भवेत्फलदमिति शेषः । यदाहुः—अप्राप्तपाकं हरीतक्यादिद्रव्यं सदपि स्वकार्यसंपादनाशक्तं योग्यताङ्गस्य पाकस्यानासादनादिति ॥ ११ ॥

एवं सदपि कर्मापकं तत्फलदानाशक्तं, अतः पाकापेक्षं, पाकश्चास्य न स्वतः संभवतीत्याह

पाकार्हमपि तत्पक्तुं
नेशत्यात्मानमात्मना ।
धर्मसामान्य एवायं
सर्वस्य परिणामिनः ॥ १२ ॥

पाकयोग्यमपि तत् स्वयमात्मानमात्मना न पाचयितुमीशम्। सर्वस्यैव हि परिणामिनो वस्तुनः क्षीरादेरिवायं साधारणो धर्मः-यत्किमप्यपेक्ष्य परिणामित्वं नान्यथा, परिणामित्वाच्च कर्मणोऽप्यन्यापेक्षो विपाकः। अनेन 'मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्' इत्येतदपि प्रकाशितं तस्यापि परिणामित्वात्। नचैषां मलमायाकर्मणां परिणामकत्वमनीशेन सुशकमित्युक्तम्। ईशतीत्यदुष्टम् ईश इवाचरति इति 'सर्वप्रातिपदिकेभ्य इत्येके' इति क्विपः स्मरणात्॥

तदियता तावत्सर्वकर्तृत्वं परमेश्वरस्य प्रतिपादितम्। अत एव चास्य सर्वज्ञत्वं सिद्ध्यतीत्याह

सर्वज्ञः सर्वकर्तृत्वा-
त्साधनाङ्गफलैः सह ।

योयज्जानाति कुरुते

स तदेवेति सुस्थितम् ॥ १३ ॥

सर्वकर्तृत्वादेवेश्वरस्य सर्वज्ञत्वं सर्वविषयज्ञानं विना सर्वकर्तृतानुपपत्तेः । यो हि यद्यत्क्रियासिद्धिं, तदङ्गानि, तत्फलानि च जानाति, तस्यैव विचित्रतत्तत्कारकोपयोगाभिसंधानवतस्तत्तत्कर्तृत्वं घटते कुविन्दादेरिव पटादिकृतौ । अतो यस्तु तत्राज्ञः, स तत्कार्यकरणाय नालं बालिश इव न्यायविद्याद्युपन्यास इत्येतत्सुस्थितमित्यव्यभिचारीति ॥१३॥

तच्चास्यावृतिशून्यत्वा-

न्न व्यञ्जकमपेक्षते ।

तन्न सांशयिकं तस्स-

द्विपरीतं न जातुचित् ॥ १४ ॥

शिवस्य तत् सर्वज्ञत्वमनाद्यावरणशून्यत्वान्न व्यञ्जकापेक्षम्, नापि संसारिण इव संशयविपर्ययानध्यवसाययुक्तमत एव हेतोः ॥ १४ ॥

तथाहि

यानि व्यञ्जकमीक्षन्ते
 वृतत्वान्मलशक्तिभिः ।
व्यञ्जकस्यानुरोधेन
 तानि स्युर्व्याहतान्यपि ॥१५॥

यानि किल ज्ञानानि मलशक्त्यावृतत्वाद्भोगनिष्पादनाय व्यञ्जकं कलाद्यपेक्षन्ते, तानि व्यञ्जकस्य कलादेः स्वल्पप्रकाशकरणात् तथाविधव्यञ्जनभाञ्जि ज्ञेयविषये व्याघातवन्त्यपि भवन्ति । नचैश्वरं ज्ञानमेवंविधं पूर्वोक्तादेवावृतिशून्यत्वात्कारणात् । तथाचोक्तं श्रीकिरणे

'अनादिमलमुक्तत्वात्सर्वज्ञोऽसौ ततः शिवः ।'

इति ॥ १५ ॥

यतश्चैवमतः

नाध्यक्षं नापि तल्लैङ्गं
 न शाब्दमपि शाङ्करम् ।
ज्ञानमाभाति विमलं
 सर्वदा सर्ववस्तुषु ॥ १६ ॥

अक्षसव्यपेक्षं हि ज्ञानं प्रत्यक्षमक्षव्यापारणात्, तदभावेऽभावात्तद्भावे भावानुविधायित्वाच्च व्याहतमपि स्यात्। नचैवं शाम्भवं ज्ञानमतो न प्रत्यक्षम्, नाप्यानुमानिकं तस्य प्रत्यक्षाधीनवृत्तित्वात्, शाब्दत्वं तु दूरापास्तमत्यन्तपरोक्षार्थविषयत्वात्तस्य। नच किंचिद्भगवतः परोक्षमतः सर्वविषयं तस्य ज्ञानं प्रकाशते। ननु

'...............पञ्चवक्त्रस्त्रिपञ्चदृक्।'

इत्यादिना श्रूयत एवागमेष्वीश्वरस्य शरीरेन्द्रिययोगः, तत्सद्भावेऽपि कस्मान्न तत्सव्यपेक्षे ईश्वरस्य ज्ञानक्रिये। नास्य ज्ञानक्रियोपयोगी शरीरेन्द्रिययोगः स्वभावत एव सर्वार्थक्रियाशक्तिमत्त्वादिच्छामात्रेणैव सर्गस्थित्यादिकरणक्षमत्वात्। भक्तानुग्रहणार्थं चाकारग्रहणमन्यथा निराकारे ध्यानपूजाद्ययोगात्। यदुक्तं श्रीमत्पौष्करे

'साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम्।
सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्॥'

इति॥ १६॥

तदेकं विषयानन्त्या-
द्भेदानन्त्यं प्रपद्यते ।
कर्तृत्वं तदभिन्नत्वा-
त्तद्वदेवोपचारतः ॥ १७ ॥

यथावस्थितवस्त्ववभासात्मनस्तावत्तदीय-स्यैकस्य ज्ञानस्य ज्ञेयानन्त्यादुपाधिभेदात्कृतमौ-पचारिकमानन्त्यम्, शास्त्रात्मनोऽपि स्रोतोभे-दादध्येतृभेदात्प्रवर्तयितृभेदात् । तेषां च परा-परत्वाद्गौणमेवानन्त्यम् ।

'सर्वज्ञानक्रियारूपा शक्तिरेकैव शूलिनः ।' (मो० का० २५)

इत्यनया दृशा तस्माज्ज्ञानादभिन्नत्वात् कर्तृत्व-मपि तथैवोपचारादानन्त्यं प्रतिपद्यते ॥ १७ ॥

अथ निर्वर्णितोपसंहाराय व्याख्येयोपक्षे-पाय चायं श्लोकः

सत्तास्वरूपकरणार्थविधेयदृग्भि-
र्लेशोदिताभिरिति ये विदुरीशतत्त्वम् ।
ते मोचयन्ति भविनो भवपङ्कमग्नान्
नो विस्तरेण पुरुषाः पशुपाशरूपम् ॥

'अथोपलभ्य देहादि वस्तु कार्यत्वधर्मकम् ।
कर्तारमस्य जानीमः················॥' (१।३।१)

इत्यादिना तावदीश्वरस्य सत्ता साधिता ।

'नित्यं कालानवच्छेदाद्वैतत्वान्न प्रदेशगम् ।
क्रमाक्रमसमुत्पत्तेः क्रमाद्युत्पत्तिशक्तिमत् ॥' (१।३।३)

इति तत्स्वरूपमुक्तम् ।

'करणं च न शक्त्यन्यच्छक्तिर्नाचेतना चितः ।' (१।३।४)

इत्यनेन करणं कथितम् ।

'विनियोगफलं मुक्तिर्भुक्तिरप्यनुषङ्गतः ।' (१।२।९)

इत्यमुनार्थः प्रयोजनमुपवर्णितम् ।

'जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः ।
कृत्यम्··················॥' (१।२।३)

इत्यनेन पञ्चविधं विधेयमुक्तम् । दृक् च अस्य ज्ञानं

'नाध्यक्षं नापि तल्लैङ्गं···············।' (१।५।१६)

इत्यादिना निर्णीतमिति । एताभिः सत्तास्वरूपकरणार्थविधेयदृग्भिः संक्षेपोक्ताभिरीशतत्त्वं ये विदुः जानन्ति, ते पुरुषाः संसारकर्दमनिमग्नान् संसारिणो मोचयन्ति, नतु विस्तरेण पशुरूपं पाशरूपं वा ईश्वरं ये विदुः, यथा

'आत्मैवेदं सर्वम् ।' 'पुरुष एवेदं सर्वम् ।'

इत्येवंविधपुरुषरूपेश्वरवादिनः कर्मकालाव्यक्तादिपाशरूपेश्वरवादिनो वा पशूनां स्वयमेवानाद्यज्ञाननिमग्नत्वेनाकिंचित्करत्वात् , पाशानां च तत्पाशन एव चरितार्थत्वात् तत्तत्संयोगे वियोगादौ वा निगलादिवत् परापेक्षत्वे सत्यनीश्वरत्वात् । तथाविधेश्वरावबोधात् परमोचनं सकललोकोपहासावहं यतः । पशुशब्दश्चात्र समनन्तरप्रकरणोपक्रम्यमाणात्मतत्त्वोपक्षेपायोपहृतः ॥ १७ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तावीश्वरपदार्थप्रकरणं पञ्चमम् ॥ ५ ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

### ( षष्ठः पटलः )

अथ विश्वनिमित्तस्य
प्राप्तं लक्षणमात्मनः ।
तदीशोक्तौ गतप्रायं
तथाप्युद्देश उच्यते ॥ १ ॥

अथेदानीं पाश्चात्यपटलान्तसूचिताभिधानस्यात्मनो लक्षणमुच्यत इति पाटलिकप्राकरणिकौ संबन्धौ ज्ञेयौ । सौत्रादयस्तु प्राग्वदुन्नेयाः प्रतिपटलमुच्यमाना अतिपौनरुक्त्यमावहन्ति । विश्वस्य जगतो निमित्तं प्रवर्तनहेतुरात्मा तद्भोगसाधनाय तनुकरणभुवनादीनामुत्पत्तेः । तस्यात्मनो लक्षणमीश्वरोक्त्यनन्तरमवसरप्राप्तं कथ्यते । तच्च यद्यपि

'तेन स्वभावसिद्धेन भवितव्यं जगत्कृता ।' (१।२।४)

इत्यत्र ईश्वरसिद्ध्यनुषङ्गेण

'चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा।
सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ॥' (१।२।५)

इत्यादिनोक्तप्रायं कथितकल्पं, तथाप्युद्देशः सोपपत्तिकतत्स्वरूपसंक्षेप उच्यते ॥ १ ॥

कार्यं क्षित्यादि कर्तेश-
स्तत्कर्तुर्नोपयुज्यते।
न स्वार्थमप्यचिद्भावा-
न्नानर्थ्यं कर्तृगौरवात् ॥ २ ॥

कार्यत्वं तावत्क्षित्यादेरेव संनिवेशादिमत्त्वेन प्राक् कथितम्। तस्य च कर्ता प्रागुक्ताभिर्युक्तिभिरीशः सिद्धः। तत्तु कार्यं तदुपयोगि वा स्यात् स्वोपयोगि अनुपयोगि अन्योपयोगि वेति चत्वारः पक्षाः। तत्र न तावदीश्वरोपयोगि, नहि पृथिव्यादिभिस्तस्य स्वात्मन्यर्थक्रिया काचित् क्रियते नित्यपरिपूर्णस्वरूपत्वात्। न च तत् क्षित्यादि कार्यं क्षित्याद्यर्थमेव क्रियते तेषामाचैतन्यात् करणीयस्याभावात्। चेतनस्य हि धर्मादिचतुर्वर्गप्रेप्सोः करणीयं संभवति, न पटादेः। नचैतत्कार्यमनर्थकं कर्तृगौरवात्।

सामान्येनापि कर्त्रा यत्कार्यं क्रियते, तन्नानर्थकं भवति, किं पुनः परमेश्वरव्यापारितैर्जगत्कर्तृभिर्ब्रह्मादिभिः । तत्कार्यकरणे च न प्रयोजनं प्राक् प्रदर्शितम् ॥ २ ॥

पारिशेष्यात्परार्थं तत्

तत् क्षित्यादि कार्यम् ॥

कश्चात्र पर इत्याह

क्षेत्रज्ञः स परस्तयोः ।

कर्तृकार्ययोः परोऽन्यः प्रस्तुताभिधानः क्षेत्रज्ञो यश्चात्मेत्यर्थः ॥

अत्र चार्वाकच्छायया आत्मनिरासायेदमाशङ्क्यते

परो देहस्तदर्थत्वा-

त्परार्थाः क्ष्मादयो ननु ॥ ३ ॥

ननूपलभ्यमानप्रयोजनानां क्षित्यादीनां परार्थत्वमस्तु, स त्वत्र परः काय एव यस्यारम्भकाश्चोपयोगिनश्च पृथिव्यप्तेजोवायवः। तस्मान्न क्षित्यादीनां परार्थत्वेनात्मनामनुमानम् ॥ ३ ॥

अत्रोत्तरं

कायोऽप्यचित्त्वादान्यार्थ्यं
सुतरां प्रतिपद्यते ।

देहोऽपि परार्थ एव आचैतन्यात् पृथिव्यादिवदिति तस्याप्यान्यार्थ्यं पारार्थ्यं सुतरामुपपद्यते । ततश्च देहस्य क्षित्यादीनां च परार्थत्वात्पर आत्मैवात्र युक्त्युपपन्नः ॥

ननु देहादन्यत्र यदि चैतन्यं स्यात्, स्यादेतदेवम् । पृथ्व्यादिचतुर्भूतविकारके प्राणादिकारणीभूते गर्भादौ संविदुद्भवः किण्वादिद्रव्यविकारे मदशक्त्युत्पत्तिवत् । तथाहि कृशोऽहं स्थूलोऽहमिति शरीर एवाहंप्रत्ययो दृष्टः, न च तद्व्यतिरिक्त आत्मा उपलभ्यते देहेऽस्त्यात्मा इत्यस्य अश्वे विषाणमित्यादिवत् प्रत्यक्षनिराकृतत्वात् । अथ परार्थाश्चक्षुरादयः संघातत्वात् शयनाद्यङ्गवदित्यादिना करणादीनां कर्तृप्रयोज्यत्वादिना वा अनुमानेनात्मा प्रसाध्यते, न तद्युक्तं तस्यात्मापलापिनश्चार्वाकान्प्रत्यसिद्धेः । नह्येषां प्रत्यक्षादन्यत्किंचित्प्रमाणं,

सिद्धावपिवा अनुमीयमानस्यात्मनो देवदत्तादिवत्परत्वं प्रसज्यते । यत्किल स्वयं प्रकाशते, स एवात्मा, तत्प्रकाश्यस्तु पर इति विविक्ततया आत्मपरभावस्य प्रकाशमानस्यैव संकरोऽनवस्थानं च स्यात् । तदुक्तं

'आत्मा यदि भवेन्मेयस्तस्य माता भवेत्परः ।
पर आत्मा तदानीं स्यात्स परो यस्तु मीयते ॥'

इति । तथा

'प्रकाशते संविदेका तदन्यत्तु प्रकाश्यते ।
प्रकाश्यं च भवेत्कर्म तच्च कर्त्रा विना कथम् ॥'

इति । तस्मान्नानुमानेन देहव्यतिरिक्त आत्मा उपलभ्यते, अपितु चैतन्यविशिष्टः काय एव वस्तुसन्नित्याशङ्क्याह

## चेतनश्चेत्

अथ मन्यसे काय एव चेतनात्मकः । तथाहि यस्मिन्नुपचिते यस्योपचयः यदपचये च अपचयः, तत्तदात्मकं, यथा वह्न्युपचयापचययोरुपचयापचयावनुगच्छेदौष्ण्यम् । यौवनस्थाविरभोजनलङ्घनादिहेतुकौ च देहसंबन्धि-

नावुपचयापचयावनुकुर्वद्विज्ञानं देहात्मकमेव, अतो देह एव चेतन इति पूर्वः पक्षः ॥

अथैतत्प्रतिक्षेपः

न भोग्यत्वा-
द्विकारित्वाच्च जातुचित् ॥ ४ ॥
भोग्या विकारिणो दृष्टा-
श्चिद्विहीनाः पटादयः ।

सोऽप्येवं देहश्चेतनः कदाचिन्न भवति भोग्यत्वाद्विकारित्वाच्च । ये ये केचन विकारिणः परिणामिनो भोग्याश्च, ते ते ह्यचेतना दृष्टाः यथा पटादयः । स देहोऽप्येवंविधः, तस्मान्न चेतनः । नन्वङ्गनादिभिर्भोग्यत्वमनैकान्तिकं भोग्यत्वेऽपि तत्राचैतन्याभावात् । नानैकान्तिकं तदीयस्य देहस्यैव भोग्यत्वात् । यद्येवं, निर्जीवस्य देहस्य कथं नोपभोगः । भवत्येव तदवस्थोचित उपभोगः क्रव्यादादेः, न पुनः कान्तादेः कामिन्याद्यवस्थाया येनावस्थान्तरापत्तेर्विकारित्वेन बीभत्सरसहेतुत्वात् । तदुक्तिरत्रैव

'क्व तद्वक्त्रं क्व तदधरमधु क्वायताक्ष्याः कटाक्षः ।'

इत्यादि । एवं गजाश्वादावपि ज्ञेयम् । तस्मात्स्थितमेतत्—विकारित्वाद्भोग्यत्वाच्च देहस्याचैतन्यम्, आचैतन्याच्च पारार्थ्यमिति ॥

पुनरपि परमतमाशङ्कते

यस्मिन्सति च सत्त्वाद्वा

यस्मिन्सति यस्य भावो यदभावे चाभावस्तत् तत्कार्यं शीतमिव हिमस्य । सति च शुक्रशोणितात्मकदेहारम्भकभूतविशेषपरिणामे सत्त्वादसति च प्रध्वस्ते तस्मिन्नसत्त्वाच्चैतन्यं भूतविशेषपरिणामकृतमिति वा यद्यवेषि ॥

तदेतदनुपपन्नं यस्मात्

न सत्यपि शवे चितिः ॥ ५ ॥

यत्सद्भाव एव यस्य भावस्तत्तस्य कार्यमिति नियमोऽत्रावश्यं प्रतिज्ञातव्योऽन्यथा तदभावेऽपि भवतस्तत्कार्यत्वायोगात् यथाग्निसद्भाव एव संभवन्धूमोऽग्निकार्यः । एवं च शरीरारम्भकभूतसद्भाव एव भावः, तदभावे चाभाव एव चैतन्यस्य यदि स्यात्, तद्देह-

संबन्धितया प्रतीयेत । यावता शरीरसद्भावेऽपि गर्भादावुत्तरकालं च चेतनापगमो दृष्टः । तन्न सति सत्त्वं देहारम्भकचैतन्यसाधकम् । ननु मृतशरीरेऽपि प्राणाद्यात्मकस्य वायोरूष्मरूपस्य च तेजसोऽपगमान्न जीवावस्थायामिव शरीरारम्भकभूतसद्भावस्तस्मादत्राचेतनत्वम्, यच्च तत् सति सत्त्वमनैकान्तिकीकर्तुमशक्तम् । मैवम् । गतासवोऽपि हि केचन चलत्सन्धयः सोष्माणश्च कियन्तं कालमुपलभ्यन्ते । तेषां च जीवदवस्थावद्देहारम्भकभूतसद्भावेऽपि न चैतन्यसंभवः, गर्भावस्थायां च सकलसामग्रीसद्भावेऽपि कदाचिच्चैतन्यासंभवः। तस्मात्सति सत्त्वमनैकान्तिकमेव ॥ ५॥

ननु जीवदवस्थायां परिणामवैशिष्ट्याच्चैतन्यसंभवस्तथाविधपरिणामाभावात् गतासुदेहे तदभाव इति पुनरपि चार्वाकभूमिकयैवाशङ्क्यते

परिणामस्य वैशिष्ट्या-
दस्ति चेत्

कौमारयौवनाद्यवस्थाभेदादवान्तरतत्तदव-

स्थाविशेषभेदेन च देहारम्भकभूतपरिणाम-
कृततत्तद्वैशिष्ट्याज्जीवदवस्थायां यच्चैतन्यमस्ति,
तत्तथाविधभूतपरिणामकृततत्तद्घटपटशकटा-
द्यनेकार्थप्रकाशकानि सक्रमाणि हि विज्ञा-
नानि पूर्वपूर्वनिरोधे सत्युत्तरोत्तराणि परिणा-
मवैशिष्ट्यादेव भवन्ति, नान्यत इति न देहा-
दन्यच्चैतन्यमिति चोद्यम् ॥

अत्र परिहारः

न स्मृतिस्तदा ।

तदेति प्रत्यर्थं सक्रमसंवेदनविशेषस्य परि-
णामित्वाभ्युपगमे सति स्मृतिर्नावकल्पते ।
परिणामविशेषाणां क्रमभाविनां भिन्नत्वात् ।
असंविदितस्यान्यविदितस्य चान्येनास्मरणात् ।
नह्यननुभूतं देवदत्तानुभूतं वा चैत्रादिना स्मर्तुं
शक्यम् ॥

एवं मा भूत् स्मृतिः किं नश्छिन्नमिति
चेत्, तदप्ययुक्तमित्याह

नाप्येवं सुप्रतीतत्वा-

त्स्मर्ता कायेतरोऽस्त्यतः ॥ ६ ॥

सकललोकप्रसिद्धस्मृत्यपह्नवस्तावन्न शक्यः, स्मृतिश्चैवमुपपद्यते देहस्यासकृत्परिणामित्वेऽपि एकस्वभावस्तदन्यस्तदर्थसंनिधौ तत्तज्ज्ञानस्यान्य एवानुभविता, स एवानुसंधाता स्यादिति। अत इत्यस्मात्स्मृत्यन्यथानुपपत्तिलक्षणादपि हेतोर्देहादन्यः स्मर्तास्तीति । नच वाच्यं किमेभिः परानुमानासहिष्णोर्व्यर्थैर्हेत्वादिभिरिति, यतश्चार्वाकस्यानिच्छोरपि दुर्गतस्य दौर्गत्यमिव बलादेवानुमानं ख्यातिमनुबध्नाति । तथाहि तेन प्रत्यक्षैकप्रमाणवादिनापि चतुर्महाभूतव्यतिरिक्ततत्त्वान्तरानभ्युपगमे मृत्पाषाणादिस्थावरलक्षणा पृथिवी, जलादिश्च सरःसरित्समुद्रादिर्नादृष्टस्य गुणभेदेन सर्वं प्रत्यक्षेणावगाहितुं शक्यं तस्य प्रतिनियतव्यक्तिहेतुत्वेनाशेषजगदन्तर्गतपदार्थविषयान्वयग्रहणाक्षमत्वात् । अपिच यत्र काठिन्यं, सा पृथिवी स्थलोपलपर्वतादिवत्, पृथिवीत्वाभावे काठिन्यस्याभावश्चाबादाविव, यच्च द्रवस्वरूपं, तज्जलं तैलघृतक्षीरादेरप्युदकत्वादित्याद्यन्वयग्रहणमनुमानाङ्गं कल्पनीयम् । धर्मिणि च

देहे पक्षीकृते तद्गतस्य काठिन्यादेः पृथिव्यादिधर्मत्वनिश्चयात् पृथिव्यादिभूतचतुष्टयारब्धत्वमपि नानुमानं विनावगन्तुं शक्यम् । किंच प्रत्यक्षमेव प्रमाणं नानुमानमिति प्रमाणाप्रमाणचिन्ता नास्य प्रत्यक्षनिश्चेया । यथाह धर्मकीर्तिः

'प्रमाणेतरसामान्यस्थितेरन्यधियोगतः ।
प्रमाणान्तरसद्भाव···············॥'

इति न परं प्रत्यसिद्धत्वमनुमानस्य । तत्प्रत्यायनार्थं चेह परिशेषानुमानं प्रकरणारम्भे दर्शितं, नतु स्वसंवेदनसिद्धत्वेनापरोक्षस्यात्मनः साधनाय तत्र प्रमाणान्तरस्यानुपयोगात् । यदाहुः

'अनुभूतौ प्रमाणानां परिनिष्ठा समाप्यते ।
स्वतस्तयैव या ज्ञप्तिः किं तत्रान्यैः प्रमान्तरैः ॥'

इति । गतमेतत् । यत्तु

'परिणामस्य वैशिष्ट्यादस्ति चेन्न स्मृतिस्तदा ।'

इत्यखण्डनमेव श्लोकार्धं, तदेतच्छिवावस्थायां सूक्ष्मतरसंवेदनसंभवेऽपि परिणामस्य वैशिष्ट्यादिति स्मृत्यभावप्रतिपादकत्वेन परमता-

शङ्कया व्याख्याय समाधीयते यदुत 'नाप्येवं सुप्रतीतत्वात्' नह्येवं कचित्प्रसिद्धं यद्गतासोः सूक्ष्मतरसंवेदनमस्ति, स्मृतिस्तु नास्तीत्यपितु सुप्रतीतमेतत् यन्निर्जीवे वपुषि काष्ठादाविव संविन्नास्त्येवेति, तस्माद्देहादन्यः स्मर्तास्तीत्येवमपि व्याख्यायमाने न कश्चिद्दोषः ॥ ६ ॥

एवं पशुपदार्थं प्रसाध्य तद्विशेषान्वक्तुमाह

नाव्यापको न क्षणिको
नैको नापि जडात्मकः ।
नाकर्ता भिन्नचिद्योगी
पाशान्ते शिवताश्रुतेः ॥ ७ ॥

स चात्मा नाव्यापकः, नापि क्षणिकः देशकालाभ्यामनवच्छिन्नत्वात् । तदाहुः

'अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः ।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुनित्यते ॥'

इति । नचासावेकः

एको वशी सर्वभूतान्तरात्मा ।' (क० ५।१२)

इति प्रतिपन्नानां ब्रह्मविदामिव जन्ममरणकरणादिप्रतिनियमदर्शनस्य पुरुषबहुत्वज्ञाप-

कस्यापह्नोतुमशक्यत्वात् । नच नैयायिकवैशेषिकाणामिव जडः । नापि सांख्यानामिवाकर्ता । नच केषांचिदिवागन्तुना चिता युक्तः । कुतः इत्याह 'पाशान्ते शिवताश्रुतेः' पाशानामविद्यादीनामन्ते तत्प्रतिबन्धकत्वव्यपगमे यतोऽस्यात्मनः शिवत्वव्यक्तिः श्रूयते । तथाचोक्तं

'अथात्ममलमायाख्यकर्मबन्धविमुक्तये ।
व्यक्तये च शिवत्वस्य शिवाज्ज्ञानं प्रवर्तते ॥'

इति । नच तच्छिवत्वमव्यापकत्वादिधर्मयुक्तं ज्ञत्वकर्तृत्वरहितं वा

'नित्यं कालानवच्छेदाद्वैतत्यान्न प्रदेशगम् ।' (१।३।२)

इत्यादिना प्रत्युत तद्विलक्षणत्वस्योपपादितत्वात् । नच व्यापकत्वनित्यत्वादेर्मुक्तावेवोदयात्संसार्यवस्थायामभाव इति मन्तव्यमसदुत्पत्त्यसंभवस्योपपादयिष्यमाणत्वादिति ॥

इति श्रीभट्टविद्याकण्ठसूनुभट्टनारायणविरचितायां
मृगेन्द्रवृत्तौ पशुपदार्थनिर्णय-
प्रकरणं षष्ठम् ॥ ६ ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

(सप्तमः पटलः)

'.............................शिवः ।
पूर्वव्यत्यासितस्याणोः पाशजालमपोहति ॥' (१।२।१)

इति मूलसूत्रोपात्तात्पशुपाशेश्वरलक्षणात्पदार्थत्रयादवशिष्टमनन्तरपटलान्तोपक्रान्तं पाशपदार्थं लक्षयितुं प्रकरणत्रयम् । अत्र च सौत्रप्राकरणिकपाटलिकपादार्थिकाः संबन्धाः सुस्पष्टाः । वाक्यात्मकस्तु

'प्रावृतीशबले कर्म मायाकार्यं चतुर्विधम् ।
पाशजालं समासेन धर्मा नाम्नैव कीर्त्तिताः ॥' (१।२।७)

इत्यादिभिर्वाक्यैरनुसन्धेयः ।

अथाविद्यादयः पाशाः
कथ्यन्ते लेशतोऽधुना ।
येषामपाये पतयो
भवन्ति जगतोऽणवः ॥ १ ॥

अथेति पशुपदार्थादनन्तरमविद्या अज्ञानमञ्जनमाणवः पाश आदौ येषां ते कर्ममायारोधशक्त्याख्याः पाशाः, अधुना इदानीं, लेशतः संक्षेपतः, कथ्यन्ते येषामपगमे पशुत्वान्मुक्त्वा अणव आत्मानो जगतः पतयो भवन्ति । तत्र शिववदन्यानधीनस्वातन्त्र्याभिव्यक्तिर्मुक्तात्मनां पतित्वं, विद्येश्वराद्यधिकारभाजां तु पञ्चविधकृत्यकारित्वम् ॥ १ ॥

अथ मुक्तेः प्राक् कुतोऽवसीयते पाशितत्वमणोरिति चेत् ज्ञानक्रिययोः सर्वार्थताव्याहतेः। अन्यथा हि

पाशाभावे पारतन्त्र्यं
वक्तव्यं किंनिबन्धनम् ।
स्वाभाविकं चेन्मुक्तेषु
मुक्तशब्दो निवर्तते ॥ २ ॥

पाशरहितस्य हि पुंसो न बद्धत्वं, अबद्धस्य च किंकृतं पारतन्त्र्यं, यदनिच्छतोऽप्यस्यानिष्टप्राप्तिरिष्टव्याघातश्च भवति । अथ मन्यसे नास्य तत्पारतन्त्र्यं पाशकृतमपितु स्वाभाविक-

मिति, तर्हि मुक्ताणुषु मुक्तशब्दस्य निवृत्तिः । व्यपगतपाशे हि मुक्तशब्दो लोके प्रसिद्धः ॥

एतदेव घटयन्नाह

बन्धशून्यस्य वशिता
दृष्टा बद्धस्य वश्यता ।
एतावती ते बद्धत्व-
मुक्तत्वे बद्धमुक्तयोः ॥ ३ ॥

इयदेव तद्बद्धस्य बद्धत्वं—यत्पाशितत्वे सत्य-पाशितवश्यता स्वतन्त्रपरमेश्वरायत्तत्वमित्यर्थः । मुक्तस्य चैतावदेव तन्मुक्तत्वं—यद्बद्धत्वापगमात्तद्वशित्वं स्वातन्त्र्याभिव्यक्तिः । तथाहि लोकेऽपि बन्धरहितो वशी, बद्धश्च वश्य इत्युच्यते ॥३॥

किमत इत्याह

तत्पारतन्त्र्यं बद्धत्वं

तत्तस्माद्धेतोर्यदेतदात्मन इष्टप्राप्त्यादौ पारतन्त्र्यं, तद्बद्धत्वं 'गमयति' इति शेषः । नह्यबद्धस्य स्वातन्त्र्यव्याघातो भवतीति ॥

नच तत् आत्मनोऽनादिकालीनतया ज्ञानक्रियाशक्तिवन्नित्यमेष्टव्यमनिष्टप्रसङ्गात् । तथाहि

तस्मिन्नित्ये चिदादिवत् ।
मुक्तिसाधनसंदोहो
व्यर्थोऽलमनया धिया ॥ ४ ॥

तस्मिन्नात्मनः पारतन्त्र्ये, नित्येऽभ्युपगम्यमाने कदाचिदपि तदनुच्छेदान्मुक्तिसाधनकलापः परैरपीष्टो ज्ञानयोगादिरनर्थकः स्वातन्त्र्याभिव्यक्त्यभावात् सदैवात्मनो बद्धतयावस्थितेरित्यलमनया धिया निवार्यतामीदृशी संसारानुच्छित्तिहेतुर्मतिरिति भावः । तस्मात्स्थितमेतत्पाशकृतं पारतन्त्र्यं, पाशाश्चाञ्जनादयः ॥

स किलात्मा

नित्यव्यापकचिच्छक्ति-
निधिरप्यर्थसिद्धये ।
पाशवं शाम्भवं वापि
नान्विष्यत्यन्यथा बलम् ॥ ५ ॥

यदि ह्यणुरनाद्यविद्योपरुद्धचिच्छक्तिर्न भवेत्, तदानीं नित्यव्यापकचिच्छक्त्यास्पदत्वे सत्यपि कथं भवावस्थायां भोगलक्षणस्यार्थस्य निष्प-

त्तये पशोरिदं पाशवं पशूचितं कलाद्युत्तेजनं स्वसामर्थ्यस्याभिव्यक्त्यपेक्षते, मुक्तिनिमित्तं च कथं शाम्भवं बलमन्वेषते, नान्यथा बलं प्रतीक्षते पाशानभ्युपगमे सति स्वभावत एवामलचित्स्वरूपत्वात्तदन्वेषणस्यानर्थक्यात् । यतश्चावस्थाद्वयेऽप्ययं पाशवं वा पारमेश्वरं वा बलोत्तेजनमपेक्षते, तस्मात् किमप्यस्यास्ति ज्ञानक्रियासंनिरोधकं यत्कृतः स्वातन्त्र्यव्याघातः ॥ ५ ॥

तदावरणमस्याणोः
पञ्चस्रोतसि शाङ्करे ।
पर्यायैर्बहुभिर्गीत-
मदृष्टं पशुभिः सदा ॥ ६ ॥

अस्यात्मनस्तदावरणमञ्जनं पञ्चस्रोतसि शैवे शास्त्रे वक्ष्यमाणैर्नामभिरभिहितम् । तत्तु पशुभिः पशुशास्त्रप्रणेतृभिः कदाचिदपि न बुद्धम् ॥ ६ ॥

अथ कैर्नामभिस्तच्छास्त्रेषूक्तमित्याह

पशुत्वपशुनीहार-
मृत्युमूर्च्छामलाञ्जनैः ।

अविद्यावृतिरुग्ग्लानि-
पापमूलक्षपादिभिः ॥ ७ ॥

नच तदेकैकस्मिन्नात्मनि भिन्नमपित्वेकमनेकचिदावारकशक्तियुक्तमित्याह

तदेकं सर्वभूताना-
मनादि निबिडं महत् ।
प्रत्यात्मस्थस्वकालान्ता-
पायिशक्तिसमूहवत् ॥ ८ ॥

तदावरणं चतुर्दशविधस्यापि भूतसर्गस्यैकमेव । कस्मादित्यत्रैव विशेषणद्वारेण हेतुमाह अनादीति, यस्माद्वक्ष्यमाणयोपपत्त्या तत् सर्वभूतानामनादि न मायीयबन्धनवदागन्तुकम्, अत एवैकम् । अनेकत्वे हि तस्याचेतनत्वात् कारणान्तरपूर्वकत्वेनानादित्वानुपपत्तिः । नच कारणान्तरपूर्वकत्वेऽपि कलादिवत् पारम्पर्येण बन्धकत्वादनादित्वं भविष्यतीति वाच्यं, यथोक्तं श्रीमत्किरणे

'यथानादिर्मलस्तस्य कर्माप्येवमनादिकम् ।
यद्यनादि न संसिद्धं वैचित्र्यं केन हेतुना ॥

तस्मादनादिकं कर्म मायाप्येवं भवेत्तथा ।'

इति, तद्विरहिणः शिवस्येव पुनर्बन्धासंभवात् । तत्सद्भावे वा न मलरहितत्वमिति वक्ष्यामः । निबिडं घनमभेद्यमित्यर्थः । व्यापकानामात्मनामावारकत्वात् महत् । प्रत्यात्मस्थेन स्वस्वपरिणामकालापसारिणा शक्तिव्रातेन युक्तम् । तथा चोक्तं तत्त्वत्रयनिर्णये

'मलशक्तयो विभिन्नाः प्रत्यात्मं चैव तद्गुणावरिकाः।' (११)

इति ॥ ८ ॥

तच्चाञ्जनं

तदनादिस्थमर्वाग्वा
तद्धेतुस्तदतोऽन्यथा ।
रुणद्धि मुक्तानेवं चे-
न्मोक्षे यत्नस्ततो मृषा ॥ ९ ॥

तत्तेषामात्मनामनादौ काले स्थितमनादिस्थं न त्वादिमत्त्वेन स्थितम् । अत्रैव युक्तिमाह अर्वाग्वेति, यदि ह्यादिमत्त्वेनात्मसु स्थितं तदभ्युपगम्यते, तदा तद्योगे हेतुः 'वाच्यः' इत्यध्याहारः। तदतोऽन्यथेति यदि तु तदञ्जनम-

तोऽन्यथेति हेतुमनपेक्ष्यैवात्मानमाश्लिष्यति, तदानीं मुक्तानप्यात्मनो रुणद्धि उपरुद्धदृक्क्रियान्करोतीति प्रसक्तम् । को दोष इति चेत् मोक्षे यत्नस्ततो मृषेति । मुक्तात्मानोऽपि यदि पुनःपुनर्मलेन युज्यन्ते, ततो गजस्नानप्रायेऽस्मिन् मोक्षे मिथ्यैव यत्नः भूयोऽपि मलयोगतः संसारितायाः संभवात् । तस्मान्नागन्तुकमात्मनां मलं, किं तर्हि, अनादि । तथाचोक्तं श्रीमत्स्वायम्भुवादौ

'अथानादिर्मलः पुंसां पशुत्वं परिकीर्तितम् ।'

इति ॥ ९ ॥

अथास्यैव युक्त्यन्तरमाह

तदेकं बहुसंख्यं तु
ताद्दगुत्पत्तिमद्यतः ।

तदञ्जनमेकमनेकत्वे प्रमाणाभावात् । यतो यस्मात्, ताद्दगिति तथाविधमनेकत्वपरिणामित्वादिगुणयुक्तं यदनेकं घटादिवदुत्पद्यमानं द्दष्टम् । नचैतदुत्पत्तिमदनाद्यात्मावारकत्वात्, अत एकमनेकत्वे हि कारणपूर्वकत्वादस्यादिमत्त्वं स्यात् ॥

'प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवत् ।' (८)

इति यदुक्तं, तदुपपादयितुमाह

किंतु तच्छक्तयोऽनेका

युगपन्मुक्त्यदर्शनात् ॥ १० ॥

एकस्याप्यस्यानेकाः प्रत्यात्मस्थाश्चित्क्रियासंनिरोधिका नित्याः शक्तय एष्टव्याः । अन्यथैकत्वे सति एकस्मात्पुरुषादपसृते तस्मिन् सर्वेषां तुल्यकालं मुक्तिः स्यात् । यतस्तु न मुक्तिर्यौगपद्येनोपलभ्यते, तस्मात्कारणात् तच्छक्तिबहुत्वाभ्युपगमो युक्तः ॥ १० ॥

नच तास्तच्छक्तयः स्वातन्त्र्येण रुन्धन्ति अपसरन्ति वा, किं तर्हि

तासां माहेश्वरी शक्तिः

सर्वानुग्राहिका शिवा ।

धर्मानुवर्तनादेव

पाश इत्युपचर्यते ॥ ११ ॥

'आवृतीशबले कर्म...............।' (१।२।७)

इत्यादिना प्राक् मलेन नान्तरीयकतयोद्दिष्टां परमेश्वररोधशक्तिं व्यापारेण लक्षयति, तासां

मलशक्तीनां चित्क्रियासंनिरोधकत्वलक्षणस्य धर्मस्यानुवर्तनाद्धेतोः शैवी शक्तिः पाशतयोपचर्यते। नच तत्र मुख्यं पाशत्वम्। कुत इति विशेषणद्वारेणात्रैव हेतुः सर्वानुग्राहिका शिवेति। सा हि सकलजगदनुग्रहस्वभावत्वेन तच्छ्रेयःप्रसाधिका ॥ ११ ॥

एवं च

परिणामयत्येताश्च
रोधान्तं कार्कचित्त्विषा।
यदोन्मीलनमाधत्ते
तदानुग्राहिकोच्यते ॥ १२ ॥

परिणामशब्दात् 'प्रातिपदिकाद्धात्वर्थे' इति णिचि कृते परिणामयतीति रूपम्। एताश्च सर्वभूतगतास्तस्य संबन्धिनी शक्तिः रोधान्तं तदधिकारकालं यावत् परिणामेन योजयति। पतिशक्तिः कार्कचित्त्विषा हेतुभूतयोन्मीलनं यदा करोति, तदानुग्राहिकेत्युच्यते। कशब्देन मूर्धा सदानुग्रहैकव्यापार ईशानः। ईशानमूर्धेति मन्त्रलिङ्गम्। स एव सकलजगदनुग्रहे

नित्योद्युक्तत्वादर्केणोपमितः । ततः प्रवृत्तया परश्रेयःप्रकाशिकया ज्ञानभासा तयोन्मीलित-स्वरूपाणामणुवर्गाणां यदोन्मीलनमाशयविकासनं करोति, तदानुग्राहिका भण्यते ॥ १२ ॥

अत्र मुनिः प्रश्नयति

शम्भोश्चिदाद्यनुग्राह्यं
तद्विरोधितया मिथः ।
युगपन्न क्षमं शक्तिः
सर्वानुग्राहिका कथम् ॥ १३ ॥
कथं भूतोपकारार्थं
प्रवृत्तस्य जगत्प्रभोः ।
अपकारकमाविश्य
युज्यते तुन्नतोदनम् ॥ १४ ॥

चितः सकलात्मानः, आदिग्रहणादचितो मलकर्ममायातत्कार्याणि । तदेतत्सर्वं सर्वेशित्वादेव किल परमेश्वरस्यानुग्राह्यम् । तच्चानुग्राह्यत्वमेषां चिदचितां पाश्यपाशानां तुल्यकालं न घटते । तथाह्यचितां पाशानामनुग्रहे पाश्यस्य प्रत्युत तिरस्कारः स्यात् नानुग्रहः, चिता-

मनुग्रहे च तद्बन्धानां न्यग्भावनमिति परस्पर-
विरोधित्वाद्युगपदेषामनुग्रहानुपपत्तिः । तत्कथं
सर्वानुग्राहिका शक्तिरुक्ता । किंच कृपया सर्व-
भूतानामनुग्रहप्रवृत्तस्य पत्युरुपकारस्यापकारकं
दुःखदमाणवादिपाशजालमनुगृह्य आवृतदृक्क्रि-
याशक्तित्वादस्वातन्त्र्यादिव्यथितानां परमात्मनां
बन्धकानुग्रहेण व्यथितव्यथनं न युक्तमिति
पूर्वः पक्षः ॥ १४ ॥

सिद्धान्तस्तु

न तोदनाय कुरुते
मलस्याणोरनुग्रहम् ।
किंतु यत्क्रियते किंचि-
त्तदुपायेन नान्यथा ॥ १५ ॥

सत्यं चिदचितामनुग्राहिका शक्तिः । नचा-
स्यास्तुल्यकालमपि तदनुग्रहोऽनुपपन्नः परस्पर-
विरोधाभावात् । नत्वणोर्व्यथनार्थं मलस्य परि-
णामरूपमनुग्रहं करोति, अपित्वनुग्रहायैव ।
तथाहि यत्किंचिदुपायेन कर्तुमुचितं, तन्ना-
नुपायेन ॥ १५ ॥

अयं च साधूपायः, यदुत

न साधिकारे तमसि
मुक्तिर्भवति कस्यचित् ।
अधिकारोऽपि तच्छक्तेः
परिणामान्निवर्तते ॥ १६ ॥

सोऽपि न स्वत एव स्या-
दपि योग्यस्य वस्तुनः ।
सर्वथा सर्वदा यस्मा-
च्चित्प्रयोज्यमचेतनम् ॥ १७ ॥

यावत्किल मलस्याधिकारस्तावन्न मुक्तिः कस्यचिद्भवति। तन्निवृत्तिरेव मुक्तिशब्दाभिधेया। यतः 'अधिकारश्च तच्छक्तेः परिणामात्समाप्यते' सच परिणामस्तदर्हस्यापि वस्तुनो न स्वतो भवितुं शक्तः सर्वप्रकारेण सर्वकालं चाचेतनस्य चेतनप्रयुक्तस्य तत्तत्कार्यदर्शनात्। तस्माच्चिदनुग्रहस्य तदर्थाञ्जनादिपरिणामस्य च परस्परमविरोध इति प्रथमचोद्यनिरासः ॥ १७ ॥

अथ द्वितीयस्य परिहारः

यथा क्षारादिना वैद्य-
स्तुदन्नपि न रोगिणम् ।
कोटाविष्टार्थदायित्वा-
दुःखहेतुः प्रतीयते ॥ १८ ॥

पाशावृतदृक्क्रियावृत्तिष्वणुषु तत्तत्पाशशक्त्यनुवर्तनद्वारेण जन्मद्रावणादिदुःखदायित्वाद्वामोऽपि परमेश्वरस्तदभ्युदयायैव प्रवृत्तत्वान्न दुःखहेतुरवगम्यते—यथा वैद्यः क्षारशस्त्रादिना रोगिणं व्यथयन्नपि कोटौ प्रान्ते अभिमतस्यारोग्यलक्षणस्यार्थस्य साधकत्वात् व्यथाहेतुरपि न दुःखदायित्वेनैव ज्ञायते ॥ १८ ॥

नन्वत्यन्तशुद्धस्वरूपस्य भगवतः किं पाशधर्मानुवर्तनेनेत्याह

सर्वगत्वान्महेशस्य
नाधिष्ठानं विहन्यते ।
नच यत्रास्ति कर्तव्यं
तस्मिन्नौदास्यमेति सः ॥ १९ ॥

अचिदधिष्ठानं भगवतो न विहन्यते सर्व-

गत्वान्महेशतया सर्वकर्तृत्वाच्च। यत्र यत्र कर्तव्यं किमप्यस्ति, तत्र तत्र च तादर्थ्यमेत्यापि तत्तत्कर्तुरधिष्ठानेन सर्वदैव सर्वं करोतीत्युक्तमीश्वरसिद्धौ। उदास्त इत्युदासस्तस्य भाव औदास्यमकर्तृत्वमित्यर्थः ॥ १९ ॥

तदेवं युगपत्सर्वानुग्राहित्वं शक्तेः प्रसाध्य, तदेव घटयन्ननुग्रहशब्दार्थमाह

धर्मिणोऽनुग्रहो नाम
यत्तद्धर्मानुवर्तनम् ।
न सोऽस्ति कस्यचिज्जातु
यः पत्या नानुवर्त्यते ॥ २० ॥

धर्मिणोऽनुग्राह्यस्य धर्माणां यदनुवर्तनं सोऽनुग्राहकस्यानुग्रहः क्रमविकस्वरस्वरूपाणां पद्मानामिव विवस्वतः। स इति तथाविधो धर्मः कस्यचिदपि धर्मिणो नास्ति, यः परमेश्वरेण नानुवर्त्यते नाधिष्ठीयते तस्य सर्वव्यापकत्वात्॥

एवं च

गताधिकारनीहार-
वीर्यस्य सत एधते ।

पशोरनुग्रहोऽन्यस्य
तादर्थ्यादस्ति कर्मणः ॥ २१ ॥

गतः समाप्तः क्रियादृक्प्रतिरोधकत्वरूपोऽधिकारो यस्य तद्गताधिकारं नीहारस्य तमसो मलस्य संबन्धि वीर्यं सामर्थ्यं यस्य तस्य तथाविधस्य सतः पशोर्बद्धात्मनोऽनुग्रह एधते वर्धते बहुलीभवति निवृत्ताधिकारायां मलशक्ताविति यावत् । अन्यस्य तु मलादेः पाशजालस्य, यत् कर्मणः परिणामितादेस्तादर्थ्यं तत्प्रयोजकत्वं, तस्मादनुग्रहो भवति । बद्धात्मविमुक्त्यै यत्परिणामिताप्रयोजकत्वं, स एव पाशानामनुग्रह इत्यर्थः ॥ २१ ॥

एवं च प्रकृते किं व्यवस्थितमित्याह

बोद्धृत्वपरिणामित्व-
धर्मयोरनुवर्तनम् ।
मलस्य साधिकारस्य
निवृत्तेस्तत्परिच्युतौ ॥ २२ ॥

मलस्य साधिकारस्येत्याणवस्याञ्जनस्याधिकारनिवृत्तेस्तद्भावभाविन्या अनादिकाली-

नायाः परमेश्वररोधशक्तेरपगमोन्मुख्याः परि-च्युतौ किञ्चिच्छिथिलीभावे सति बोद्धृत्व-धर्मानुवर्तनमात्मनोऽनुग्रहः, परिणामित्वधर्मा-नुवर्तनं पाशानामिति ॥ २२ ॥

उपसंहरन्नाह

इत्येवं यौगपद्येन
क्रमात्सुघट एव हि।
मायायाः साधिकारायाः
कर्मणश्चोक्त एव ते ॥ २३ ॥

इत्येवमुक्तया युक्त्या यौगपद्येन चिदचि-तोरनुग्रहो न विरुद्धः क्रमात् सुघट एव, न दुरुपपादः। मलवच्च मायायाश्च कलादिक्षि-त्यन्तस्वाधिकारसहितायाः कलाद्याविर्भावल-क्षणस्तदुपसंहारात्मकश्च, कर्मणस्तु फलदानौ-न्मुख्यापादनात्मकः, सोऽयमनुग्रहो मायाकर्म-णोरनुक्तोऽप्युक्त एव ज्ञेयः

'सर्वथा सर्वदा यस्माच्चित्प्रयोज्यमचेतनम्।' (१७)

इति सामान्येन सर्वस्यैवोक्तत्वादिति ॥२३॥

इति श्रीभट्टविद्याकण्ठात्मजनारायणकण्ठकृतौ मृगेन्द्र-टीकायामाणवपाशपरीक्षाप्रकरणं सप्तमम् ॥ ७ ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

### ( अष्टमः पटलः )

अथ पाशपदार्थपरीक्षाधिकारात्समनन्तरपटलान्तसूचितकर्मपाशपरीक्षाप्रस्तावः। पदार्थादिसंबन्धाश्चास्य प्रोक्तप्रकरणारम्भ एवोक्ताः ।

अथेन्द्रियशरीरार्थै-
श्चिद्योगस्यानुमीयते ।
निमित्तमागामिभावा-
द्यतो नागाम्यहेतुमत् ॥ १ ॥

अथेत्याणवरोधशक्त्याख्यपाशद्वयविचारानन्तरम्, इन्द्रियैरन्तःकरणबहिष्करणैः, शरीरेण च स्थूलसूक्ष्मरूपेण, अर्थैश्चेन्द्रियार्थैर्विषयैर्योऽयं चिदात्मनो योगः, तस्यागामिभावादुत्पत्तिमत्त्वात्कारणं निमित्तमनुमीयते, न ह्युत्पत्तिमद्वाहेतुकं किंचिद्भवति ॥ १ ॥

इत्थं सामान्येन कारणमात्रं प्रसाध्य, तद्विशेषं वक्तुमाह

तस्य प्रदेशवर्तित्वा-
द्वैचित्र्यात्क्षणिकत्वतः ।
प्रतिपुंनियतत्वाच्च
सन्ततत्वाच्च तद्गुणम् ॥ ॥ २ ॥

तस्येन्द्रियशरीरार्थैश्रितां योगस्य यत्सुरनरतिर्यगादिनियतस्थानवर्तित्वम् । यच्च वैलक्षण्यं, विचित्राणि हि प्राणिनां शरीराणीन्द्रियाणि विषयाश्च दृश्यन्ते, तत्र जातिदिग्देशकालादिवैचित्र्यं तावत्प्रसिद्धम् । इन्द्रियवैचित्र्यमपि यथा—परावृत्तजिह्वत्वं गजानां, चक्षुःश्रवत्वं भुजङ्गमानां, अनालोकालोकित्वमुलूकादीनां, पुरुषाणां च केषांचिद्विपुलदृशामप्यदर्शनं, अन्धप्रायाणामपि सूक्ष्मार्थदर्शित्वमिति । विषयवैचित्र्यं तु यथा—जलधरनिपतज्जलकणोपजीवित्वं चातकानां, मयूराणामवकराहारत्वं, कुक्कुटादीनां च, कमलकिञ्जल्करसास्वादनं मधुकरसारसानामित्यादि । यतश्च क्षणिकत्वमनि-

त्यता देहादेः । यस्माच्च प्रतिपुरुषनैयत्यम्, न हि शरीरेन्द्रियविषयाणां साधारण्यं भोगसाम्यप्रसङ्गात् । यतश्च तत्सन्ततत्वं, तत्तत्प्राणिसन्तततत्वेन किल जन्मान्तरेऽपि शरीरेन्द्रियादि स्थितं यथा जात्यायुर्भोगप्रदेभ्यः कर्मभ्यः आयुःप्रदस्योपक्षीणत्वात् मृतस्यापि तस्यैव जातिभोगदे कर्मणी संतत्या त्ववतिष्ठेते, नत्वन्यमुपसर्पतः, ताभ्यां च तत्तज्जातिदेहेन्द्रिययोगः क्रियते । यत एवं तस्मात् कारणात्तत्तदपि कर्म तादृग्गुणं तत्तद्देशवर्तिनो विचित्रान् विनश्वरान् प्रत्यात्मनियतान् भवान्तरभाविनश्च देहेन्द्रियार्थान् दातुं क्षममित्येवमनुमीयते कारणासंभविनां गुणानां कार्येष्वनुपलब्धेः ॥ २ ॥

किंच

ईशविद्याद्यपेक्षित्वा-
त्सहकारि तदुच्यते ।
कर्म व्यापारजन्यत्वा-
दृष्टं सूक्ष्मभावतः ॥ ३ ॥

ईशशब्देन लक्षणयोक्तामैश्वरीं रोधशक्तिमविद्यां च मललक्षणामादिग्रहणान्मायां च यस्मादवश्यं फलदानेऽपेक्षते, तस्मात्सहकारित्वमस्य कर्मणः, नतु स्वातन्त्र्यमाचैतन्यादित्युक्तम् । अत एवास्यापेक्षणमौपचारिकं, नतु कुम्भकारस्य सूत्रदण्डचक्राद्यपेक्षणतुल्यम् । अन्यथा कुम्भकारस्यापि सूत्रदण्डाद्यपेक्षित्वात्सहकारित्वं स्यात् । किंच व्यापारेण यज्जन्यमतः क्रियत इति कर्म सौक्ष्म्याच्चादृष्टमित्युच्यते ॥ ३ ॥

तच्च

जनकं धारकं भोग्य-
मध्यात्मादित्रिसाधनम् ।

जनकं निमित्ततया देहेन्द्रियभुवनादेः, यतः कर्मफलोपभोगायैव तत्तत्तनुकरणादियोगोत्पादः । धारकत्वं च तस्यैव प्रतिनियतकालस्य मातृत्वेन । भोग्यं च तत् फलद्वारेण । किंचाध्यात्मादि त्रयं साधनं यस्य, तत्तथा । तत्राध्यात्मशब्देनान्तःकरणतया संनिकर्षेणात्मानमधिकृत्य यद्वर्तते, तन्मन उच्यते । आदिग्रहणाद्वा-

क्कायौ गृह्येते। एवं च मनोवाक्कायाः साधनं यस्य तत् यथाक्रममिष्टदेवतानुध्याननमस्कारस्तोत्रपाठयजनादिरूपधर्मात्मकं कर्म, परस्वाजिहीर्षातत्प्रवादतदुपघातादयो यथासंख्यं मनोवाक्कायकर्मकृताः साधनं यस्य तदधर्मात्मकम्। यद्वाध्यात्मभूतदैवानि हेतुतयाधिकृत्याध्यात्ममधिभूतमधिदैवतं च यत्सुखदुःखमुत्पद्यते, तस्य त्रिविधस्यापि साधनम्। कर्मवशाद्धि चेतःप्रसादाद्युद्वेगादि चाध्यात्मिकं सुखदुःखमुदेति, आधिभौतिकं चाङ्गनासंभोगगजसिंहाद्यभिभवरूपम्, आधिदैविकं चाभिमतानभिमतवातवर्षातपादिकृतम् ॥

तत्सत्यानृतयोर्नित्वा-
द्धर्माधर्मस्वरूपकम् ॥ ४ ॥
स्वापे विपाकमभ्येति
तत्सृष्टावुपयुज्यते ।
मायायां वर्तते चान्ते
नाभुक्तं लयमेति च ॥ ५ ॥

तच्च कर्म धर्माधर्मस्वरूपं सत्यानृतप्रकृति-

त्वात्, सत्यप्रकृति कर्म धर्मरूपमनृतप्रकृति अधर्मात्मकं, स्वापे च सर्वभूतसंहारकाले विपाकं परिणाममभितः समन्तादेति । सृष्टाविति सृष्टिसमनन्तरमेवास्य यथास्वं भोगः प्रवर्तते, अन्ते च संहारे मायायां संस्काररूपतया वर्तते । नचाभुक्तं तद्विनश्यति ॥ ५ ॥

उपसंहारमाह

इति मायादिकालान्त-
प्रवर्तकमनादिमत् ।
कर्म व्यञ्जकमप्येत-
द्रोधि सद्यन्न मुक्तये ॥ ६ ॥

इत्थंप्रतिपादितस्वरूपमेतत्कर्म मायादिकालाद्यन्ताध्ववर्तिदेहेन्द्रियार्थप्रवर्तकमित्यत्रैवास्य प्रभविष्णुता मायोर्ध्वं प्रशमनात् । तच्चैतद्यद्यपि व्यापारजन्यं, तथापि प्रवाहनित्यत्वादादिमत्त्वं नास्योपपद्यत इति चर्चितप्रायम् । किंच एतत्कर्म शुभस्वरूपत्वात् पुण्यव्यञ्जकमपि सत् रोधि रोधकं संसारकारणमित्यर्थः । कुत इत्याह 'सद्यन्न मुक्तये' यस्मात्पुण्यात्मकमपि कर्म

सत् विद्यमानं न मुक्तये नापवर्गाय, अपितु तत्प्रतिबन्धायैव कल्पते यत्कर्मक्षयात्तत्साम्याद्वा शक्तिपातानुसारसमासादितानुग्रहाणामेव कैवल्यम् । ननु सद्यन्न मुक्तये इत्ययुक्तमुक्तं सत्यपि कर्मणि तत्साम्यान्मुक्तेराम्नातत्वात् । यदुक्तं श्रीमत्किरणे

'समे कर्मणि संजाते कालान्तरवशात्ततः ।
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ॥
सर्वज्ञः स शिवो यद्वत्············ ।'

इति । नैष दोषस्तथाविधस्य कर्मणः सतोऽप्यसत्त्वं परस्परप्रतिबद्धशक्तित्वेनाफलत्वात् दीक्षोत्तरकालकृतकर्मवत् । यदुक्तं खेटकनन्दनेन

'कृतमपि फलाय न स्याद्दीक्षोपर्यूपरोप्तबीजमिव ।
बलवद्विशेषशास्त्रव्यतिकरजातं विहाय कर्मैकम् ॥'

इति ॥ ६ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठकृतौ मृगेन्द्रटीकायां कर्मविचारप्रकरणमष्टमम् ॥ ८ ॥



अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

## ( नवमः पटलः )

अथ सर्वज्ञवाक्येन
प्रतिपन्नस्य लक्षणम् ।
कथ्यते ग्रन्थिपाशस्य
किञ्चिद्युक्त्यापि लेशतः ॥ १ ॥

अथशब्दश्चानन्तर्ये, पाशपदार्थपरीक्षाधिकारे कर्मपाशविचारानन्तरं ग्रन्थ्यात्मनो मायाख्यस्य पाशस्य किञ्चित्संक्षिप्तं लक्षणं कथ्यते। अस्य चानन्तरप्रकरणोपसंहारे मायाशब्दोपक्षेपात्पाटलिकः संबन्धो ज्ञेयः। पदार्थादिसंबन्धचतुष्टयं तु प्रागुक्तम्। सर्वज्ञवाक्येन प्रतिपन्नस्येति 'प्रावृतीशबले कर्म माया'(१।२।७) इत्यादिना उद्देशसूत्रेण वक्तुमभ्युपगतस्य किञ्चिदिति नहि सकलं मायालक्षणं संक्षेपेणाप्य-

भिधातुं शक्यम् । तथा चोक्तं तत्रभवद्बृह-स्पतिपादैः

'अपि सर्वसिद्धिवाचः क्षीयेरन्दीर्घकालमुद्गीर्णाः ।
मायायामानन्त्यान्नोच्येत स्रोतसां संख्या ॥'

इति । युक्त्यापि लेशत इति नागममात्रेण केव-लेन, अपितु स्तोकादनुमानोपपन्नमपि तल्ल-क्षणमुच्यत इत्यर्थः ॥ १ ॥

तदेकमशिवं बीजं
जगतश्चित्रशक्तिमत् ।
सहकार्यधिकारान्त-
संरोधि व्याप्यनश्वरम् ॥ २ ॥

तत् ग्रन्थितत्त्वमेकं परमकारणत्वादनेकत्वे प्रमाणाभावाच्च, अशिवं मोहकत्वात्, बीजं जगत इत्युपादानकारणं, विविधशक्तियुक्तं च सहकारिणां कर्मणामधिकारान्तं यावत् संरुणद्धि अणून् बध्नाति तच्छीलमिति सहकार्य-धिकारान्तसंरोधि कर्माभावे ग्रन्थितत्त्वस्याप्र-वृत्तेः । व्यापि च तत् सर्वगतं स्वकार्यव्याप-कत्वेन, अनश्वरं नित्यत्वात् महाप्रलयेऽपि

आत्मवदीश्वरवच्च तस्यावस्थानात् । तदुक्तं तत्त्वत्रयनिर्णये

'शम्भुः पुरुषो माया नित्यं विभु कर्तृशक्तियुक्तं च ।
सुप्तेऽपि विकृतिजाते त्रितयं जागर्ति तत्त्वानाम् ॥' (२ का०)

इति ॥ २ ॥

युक्त्यापि लेशत इत्युक्तमतस्तां युक्तिं दर्शयति

कर्तानुमीयते येन
जगद्धर्मेण हेतुना ।
तेनोपादानमप्यस्ति
न पटस्तन्तुभिर्विना ॥ ३ ॥

सन्निवेशादिमत्त्वादुत्पत्तिमत्त्वं किल जगतः कर्तारमनुमापयति । तेनैवोत्पत्तिधर्मकत्वेनोपादानमप्यनुमीयते । नहि उत्पत्तिमतामुपादानकारणं विनोत्पत्तिर्दृष्टा यथा पटादेस्तन्त्वाद्यभावे ॥ ३ ॥

किंच

तदचेतनमेव स्या-
त्कार्यस्याचित्त्वदर्शनात् ।

प्राप्तः सर्वहरो दोषः
कारणानियमोऽन्यथा ॥ ४ ॥

तच्च ग्रन्थितत्त्वमचेतनमचेतनस्यैव तत्कार्यस्य कलादेरुपलम्भात्, अन्यथेत्यचेतनतत्कार्योपलम्भेऽपि तस्य चेतनत्वाभ्युपगमे कारणानियमलक्षणः सर्वहर इति सर्वानुमानोच्छेदकः सकलव्यवहारहरः कोऽपि दोषः प्राप्तः ॥ ४ ॥

प्रागुद्दिष्टमविनश्वरत्वं व्यापित्वं च साधयितुं युक्तिमाह

यद्यनित्यमिदं कार्यं
कस्मादुत्पद्यते पुनः ।
अव्यापि चेत्कुतस्तस्या-
त्सर्वेषां सर्वतोमुखम् ॥ ५ ॥

जगत्संहारे यद्युपादानकारणस्य मायाख्यस्यापि नाशः स्यात्, तत्पुनः सर्गादौ कस्मादुपादानाज्जगदुत्पद्यते । अतो नास्यानित्यत्वम् । अथोच्यते सर्गादावुपादानमपि देवः स्रक्ष्यतीति । नैतद्युक्तम्, एवं हि सति तत्कार्यस्येव तस्याप्यु-

पादानं विनानुत्पत्तेरुपादानान्तरं परिकल्प्यं तस्याप्यन्यदित्यनवस्था स्यात् । व्याप्त्युपसंहारेण शक्तिरूपतया त्ववस्थाने न कश्चिद्दोषः । एवमस्याव्यापित्वे सर्वतोमुखस्य कार्यस्यानुत्पादः स्यात् । अतो व्यापकत्वमवश्यमभ्युपेयम् ॥५॥

तथैकत्वे युक्त्युपन्यासः

यदनेकमचित्तत्तु
दृष्टमुत्पत्तिधर्मकम् ।
न तदुत्पत्तिमत्तस्मा-
देकमभ्युपगम्यताम् ॥ ६ ॥

यद्यदनेकमचेतनं, तत्तत् घटपटादिवदुत्पत्तिमत् दृष्टम् । इदं तु नोत्पत्तिमत् न कारणजन्यं परमकारणत्वात्, अत एकम् । नहि परमकारणानि बहुलीभवन्तीति ॥ ६ ॥

ननु जगदुत्पत्तौ परपरिकल्पितपरमाण्वादिवदुपादानकारणबहुलत्वं यदि स्यात्, ततः को दोषः । तथाहि

पटस्तन्तुगणाद्दृष्टः
सर्वमेकमनेकतः ।

बहुभ्योऽपि हि तन्तुभ्यः पटस्यैकस्योत्पत्ति-र्दृष्टा। तद्वच्च जगत्सर्वमनेकस्मात्कारणादुत्पद्यतां, किं ग्रन्थ्यात्मकपरमकारणकल्पनयेति चोद्यम् ॥

अत्र परिहारः

तदप्यनेकमेकस्मा-
देव बीजात्प्रजायते ॥ ७ ॥

यत्तद्भवतानेकतन्त्वात्मकं कारणं पटस्योक्तं, तदनेकमप्येकस्मात्तूलकार्पासादिद्रव्यादुत्पन्न-त्वादेकम् । यथा चैकस्मात्तूलकार्पासादिद्रव्याद-नेकाकारपटाद्युत्पत्तिः, एवं परमकारणात्सर्ग-स्थितिलयाधाराख्यात्सर्गादौ मायातत्त्वाज्जगदु-त्पत्तिरिति न कश्चिद्दोषः ॥ ७ ॥

परमात्मन एव सकाशाच्चिदचिदाविर्भाव-तिरोभावाविति येषां पक्षस्तान्प्रतिक्षिपति

येषां चिद्धर्मकाद्धेतो-
रचिदप्युपजायते ।
तेषां धूमेन लिङ्गेन
जलं किं नानुमीयते ॥ ८ ॥

चित्स्वभावकाद्धेतोर्यैरचितामप्युद्भवोऽभ्युप-

गतः, तैर्धूमाज्जलानुमानं किं न क्रियते कार्य-
कारणप्रतीतिनियमासंभवे सत्यतत्स्वभावादपि
तत्स्वभावस्योत्पत्तिप्राप्तेः । यथा न दृष्टा धूमा-
ल्लिङ्गात्कदाचिदपि जलप्राप्तिः, तथा ह्यचित्स्व-
भावस्य स्वविरुद्धाच्चित्स्वभावान्नोत्पत्तिर्दृष्टा । अ-
तत्स्वभावात् तत्स्वभावस्योत्पत्तौ सर्वं सर्वस्मा-
दुत्पद्येत ॥ ८ ॥

परमाणुकारणं जगदिति येषामभ्युपगम-
स्तान्प्रत्याह

भूतावधि जगद्येषां
कारणं परमाणवः ।
तेषां पूर्वोदिताद्धेतो-
र्ज्ञातैव ज्ञानसूक्ष्मता ॥ ९ ॥

येषां भूतावधि पृथिव्यादिस्थित्यन्तं पार-
माणवं जगत्, तेषां पूर्वोदितात् द्रव्यादि-
षट्पदार्थज्ञानात् षोडशपदार्थावबोधाद्वा निःश्रे-
यसावाप्तेर्हेतोर्ज्ञानसूक्ष्मता प्रबोधतैक्ष्ण्यं ज्ञा-
तम् । तादृग्विधसूक्ष्मदर्शिन्या बुद्ध्या परमाणुका-
रणतामभिदधाना न ते वाच्यतामर्हन्ति । परमा-

णूनां कैश्चित्परमाणुकतैव निषिद्धा षट्के युगपद्योगात् षडंशत्वस्यापरिहार्यत्वात् । किंच आचैतन्ये सति अनेकत्वात् घटपटादिवत् तेषामपि कारणपूर्वकत्वेन भाव्यमिति च कुतः परमकारणता । ततश्च न तत्प्रकृतिकत्वं जगतः॥

ननु यतस्तावन्मातापितृसंबन्धिभ्यो देहेन्द्रियादिभ्यस्तत्तत्स्वसदृशशरीरकरणादि उत्पद्यमानमुपलभ्यते, ततः किमदृष्टेन मायादिना कारणेन कृतेनेत्याशङ्क्याह

शरीरादेः शरीरादि
यदि तन्निखिलात्यये ।
का वार्ता नाखिलध्वंसो
न सर्वज्ञो मृषा वदेत् ॥१०॥

मातापितृसंश्लेषशरीरेन्द्रियादिकारणकं जन्तूनां शरीरेन्द्रियादि तद्भावे भावात्तदभावे चाभावादिति यद्यभिमतं, तदस्तु, किंत्वेतत्प्रष्टव्यो भवान्—तन्निखिलात्यये सर्वसंहारे देहेन्द्रियाद्युत्पत्तेः कीदृशी गतिः । अथ सक्रम एव सर्वभावानां नाशः, नतु युगपत्सर्वसंहार

इत्युच्यते । तदयुक्तं श्रुतिस्मृतीतिहासपुराणादिसदागमगीयमानस्य संहारस्यापह्नोतुमशक्यत्वात् । तदपह्नवे च प्रथमसृष्टिरपि नेष्टा । ततश्च सृष्टिसंहारौ जगतो न संभवत इति ब्रुवाणः सर्वज्ञतामेव जह्यात् ॥ १० ॥

अथ कथं संहाराभावमभिदधतो मिथ्यावादित्वमित्याह

एकदेशेऽपि यो धर्मः
प्रतीतो यस्य धर्मिणः ।
स तस्य सर्वतः केन
जायमानो निवार्यते ॥ ११ ॥
कोटिशो मरणं दृष्ट्वा
संहतानां शरीरिणाम् ।
सोऽपि प्रतीयते कालो
यत्राशेषजनक्षयः ॥ १२ ॥

सर्वज्ञेन हि स्वस्य वचसः प्रमाणोपपन्नतया परीक्षणं प्रतिज्ञातम् । यदाह

'तापाच्छेदान्निकर्षाच्च सुवर्णमिव सर्वतः ।
परीक्ष्य भिक्षवो ग्राह्यं मद्वचो नतु गौरवात् ॥'

इति । इयं तु संहारसंभवे निर्बाधा तावदुपपत्तिः—यदुत यस्य धर्मिणो वह्न्यादेः काप्येकदेशे धूमप्रकाशदाहादिधर्मो दृष्टः, स तस्य सर्वत्रोत्पद्यमानः केन निषिध्यते, ततश्च दुर्भिक्षमारीकृतभङ्गादिना एकदेशे जन्तुसंघातस्य क्रमिकां कोटिशो विपत्तिमुपलभ्य कृत्स्नजगत्संहारकालः सदागमोदितोऽपि अनुमानेनोल्लिङ्ग्यते ॥ १२ ॥

तदानीं च मायायामुपसंहृतानि सर्वकार्याण्यासन्नित्याह

तदाधाराणि कार्याणि
शक्तिरूपाणि संहृतौ ।
विवृतौ व्यक्तिरूपाणि
व्याप्रियन्तेऽर्थसिद्धये ॥१३॥

प्रागुक्ताभिरुपपत्तिभिर्नित्यत्वव्यापकत्वादिगुणयुक्तं यत्तु मायाख्यं कारणमुपपादितं, तदाश्रयाणि तनुकरणभुवनादीनि संहारकाले शक्तिरूपाण्यवतिष्ठन्ते। सृष्टौ तु व्यक्तिस्वरूपाणि स्वस्वप्रयोजननिष्पत्तये सव्यापाराणि भवन्तीति सर्वं सुस्थम् ॥ १३ ॥

अत्र मुनिः सत्कार्यवादमसहमानः प्रश्नयति

तन्त्वादिकारकादानं
पटासत्त्वे पटार्थिनः ।
सत्त्वे कारकशब्दोऽपि
व्यपैतीति हतं जगत् ॥१४॥
साफल्यमसदुत्पत्ता-
वस्तु कारकवस्तुनः ।

यदेतच्छक्तिरूपतया मायाख्ये परमकारणे जगतोऽवस्थानकारणमुक्तं, तन्नोपपद्यते । तथाहि दृष्टवददृष्टकल्पना कर्तव्या, दृश्यते च तन्तुतुरीवेमादिकारकग्रहणमविद्यमानपटस्यार्थिनः, नतु पटसद्भावे सति । पटस्य हि सत्त्वे सति कारकशब्दोऽपि तन्त्वादेर्नोपपन्नः विद्यमानत्वादेव । असदुत्पत्तौ हि कारकवस्तुनः साफल्यं, नान्यथेति ॥

अत्र परिहारः

उत्पादयतु सर्वस्मा-
त्सर्वः सर्वमभीप्सितम् ॥१५॥

**अथाशक्यं यतः शक्य-**
**मत्र वः किं नियामकम् ।**
**नच पश्यामि तत्किंचित्**

आस्तां तावत्सदुत्पत्तिः। असदुत्पत्तौ कारक-वस्तुनः तुरीतन्तुवेमादेः साफल्याभ्युपगमे सर्वेभ्यो भावेभ्यः सर्वः सर्वमभीप्सितं किमिति नोत्पादयति । अथ न शक्यं सर्वस्मात्सर्वमुत्पादयितुं कुतश्चित्कस्यचित्कार्यस्योत्पत्तिदर्शनात् । एवं तर्हि यस्मादेव कारणाद्यदुत्पद्यते, तस्मादेव तत्, नान्यस्मात् । तत्र किं नियामकं भवतां, नहि तस्मिन्कारणे किमप्यन्यन्नियामकमुत्पश्यामो येनाभिज्ञातेनान्यदनादृत्य तदेव तदुत्पत्त्यर्थिनो गृह्णीमहि ॥

अथ सर्वस्मात्सर्वोत्पत्तिप्रसङ्गभयात्तस्यैव कारणस्य तत्कार्यजनिका शक्तिर्नान्यस्येति। तदेतत्सिद्धं साध्यत इत्याह

**शक्तिश्चेत्सिद्धसाध्यता ॥१६॥**

किमन्येन कार्यप्रतिनियतकारणेनेति तत्तत्कार्यजनिका शक्तिरेव नियामिका भविष्यति

अतच्छक्तिमतस्तज्जननायोगात् यथा न पुत्र-
जननं षण्ढस्योपपद्यते । यद्येवं तस्मिन्नेव कारणे
तत्कार्यजननशक्तिमत्त्वं नान्यत्रेति शक्तिरूप-
तया तत्र तत्कार्यमवस्थितमित्यास्माकीनपक्षा-
नुप्रवेशात्सिद्धं साध्यते भवद्भिः ॥ १६ ॥

उपचयदूषणमाह

अन्यथा कारकव्रात-
प्रवृत्त्यनुपपत्तितः ।
श्रुतिरादानमर्थश्च
व्यपैतीत्यपि तद्धतम् ॥ १७ ॥

सत्यसदुत्पत्त्यभ्युपगमे कारकव्रातस्यैव प्रवृ-
त्तिर्नोपपद्यते । असतो हि कार्यस्य वन्ध्यासुता-
देरिवोत्पत्तये किं किल कारकाणि कुर्युः । कार-
कप्रवृत्त्यनुपपत्तेश्च घटादिचिकीर्षोर्मृत्पिण्डाद्या-
नयेत्यादिका श्रुतिः, तेषां च कारकाणामादानं
ग्रहणम्, अर्थश्च तद्व्यापारलक्षणा क्रिया व्यपैति
विघटते । तस्मिंश्च व्यपेते सर्वचेष्टाव्याघातः,
प्रत्युत युष्मत्पक्षे जगद्व्याहतं स्यात् ॥ १७ ॥

ननु शक्त्यात्मना कारणे कार्यं नावस्थितम्,

अपितु तदुत्पादिका शक्तिस्तत्रास्तीत्यतच्छ-क्तिमतस्तज्जननायोगात् कार्यकारणप्रतिनिय-मसिद्धौ न काचित् क्षतिरिति पराभिप्रायमा-शङ्क्य, तं पराकरोति

अथास्त्युत्पादिका शक्ति-
र्न कार्यं शक्तिरूपकम् ।
तयोर्विशेषणं वाच्यं
नैतत्पश्यामि किञ्चन ॥ १८ ॥

अथ मतं प्रतिनियतकार्यजनिका कारणे शक्तिरस्ति, नतु शक्त्यात्मना कार्यमवस्थित-मिति। तदेतच्छब्दमात्रेण भिन्नं, नार्थेन। वक्तव्यं ह्यत्र विशेषणं भवता। यदुत तत्तत्कार्यजनिका शक्तिः कारणेऽस्ति, शक्त्यात्मना वा तत्तत्कार्यं कारणे स्थितमित्यत्र नहि किञ्चिद्विशेषणमु-त्पश्यामः ॥ १८ ॥

यत एवं

तस्मान्नियामिका जन्य-
शक्तिः कारकवस्तुनः ।

सान्वयव्यतिरेकाभ्यां
रूढितो वावसीयते ॥ १९ ॥

तस्मात्स्थितमेतत्—यदुत जन्यशक्तिः कारकवस्तुनो नियामिका इदमस्मादेवोत्पद्यत इति । साच जन्यशक्तिरन्वयव्यतिरेकाभ्यां, प्रसिद्ध्या वावगम्यते । सत्येव मृत्पिण्डे घटाद्युत्पत्तिरसत्यनुत्पत्तिरेवेत्यन्वयव्यतिरेकौ । रूढिश्चेयमाबालबालिशाङ्गनं स्थिता—यद्घटोत्पत्त्यर्थिनो न मृत्पिण्डव्यतिरिक्तमुपादानं कुलालस्योपाहरन्तीति। ननु मृत्पिण्डे यदि घटः स्यात्, तत्कुम्भकारव्यापारं विनाप्युपलभ्येत, नचोपलभ्यते, तस्मान्न मृत्पिण्डे घटोऽस्ति, अपितु ततः कुम्भकारेण क्रियते यतस्तद्व्यापारानन्तरमुत्पद्यमानस्य घटस्योपलम्भः। नैतत् । उपलब्धिकारणाभावात्तत्र घटस्यानुपलम्भः, नत्वसत्त्वात् । यदा पुनः कुलालादस्याभिव्यञ्जनक्रिययोपलब्धियोग्यता भवति, तदोपलभ्यत एव यथा खननादिना कीलमूलोदकादि । ननु कीलमूलादेः प्राक्सत्त्वे प्रमाणमस्ति, नतु मृत्पिण्डे घटस्य, तस्माद्घटस्ततो भवति, नत्वभिव्यज्यत

इति युक्तमुक्तम्। एवं चेत्, तदत्रापि सत्त्वे प्रमाणम् 'असदकरणादुपादानग्रहणात्' (सां० का० ९) इत्यादि संभवेत्-, इत्यभिव्यक्तिवाद एवमुक्तः ॥ १९ ॥

यद्येवं, तर्हि सतो भावस्य सत्त्वादेव जननं नोपपद्यते दृश्यमानस्य घटादेरिवेति पुनः स दोषस्तदवस्थ एवेत्याह

तद्व्यक्तिर्जननं नाम
तत्कारकसमाश्रयात्।
तेन तन्तुगताकारं
पटाकारावरोधकम्॥ २० ॥
वेमादिनापनीयाथ
पटव्यक्तिः प्रकाश्यते।

तदेतत्पटादेर्भावस्य जननमभिमतं-यत्तुरीतन्तुवेमादिसमाश्रयाच्छक्त्यात्मनावस्थितस्य तस्याभिव्यक्तिः। यतः पटाकारप्रतिबन्धकं तन्तुगतमाकारं वेमादिकारकव्रातेनापास्य अनन्तरं पटस्य व्यक्तिः प्रकाश्यते, नतूपलभ्यमानपटान्तरवत् सदेव तन्त्वादिभ्यः पटाद्युत्पद्यते इति। अभिव्यक्तिरपि किमसत्कार्यमुत ने-

त्येवमादिकुतार्किककुविकल्पपरिहारो ग्रन्थवि-
स्तरभीरुत्वान्न लिखितः । व्यक्तिस्वरूपत्वादभि-
व्यक्तेरभिव्यङ्ग्यता, नवेत्यादयः किल वितर्का
दूरापेता एव प्रकाशवत् । यथाहि प्रकाशः प्र-
काशात्मकत्वान्न प्रकाशान्तरप्रकाश्यः, एवम-
भिव्यक्तिर्व्यक्तिस्वभावत्वान्नाभिव्यक्त्यंन्तरम-
पेक्षत इति ॥

तदेवं प्रकृते किं सिद्धमित्याह

यथा कटादिगूढस्य
पटादेस्तव्द्युदासतः ।
नासतः क्रियते व्यक्तिः
कलादेर्ग्रन्थितस्तथा ॥ २१ ॥

यद्वत्कटाद्याच्छन्नस्य पटादेर्वस्तुनस्तदाच्छा-
दकापनयान्नाविद्यमानस्य व्यक्तिः क्रियते, अपि-
तु सदेव पटादि व्यज्यते, एवमुपसंहारकाले
शक्त्यात्मना लीनं कलादि कार्यमहर्मुखे ग्र-
न्थितः ग्रन्थितत्त्वादनन्तेशव्यापारेणाभिव्य-
ज्यत इति मायाख्यपरमकारणसिद्धिः ॥२१॥

इति श्रीभट्टविद्याकण्ठात्मजनारायणकण्ठकृतौ मृगेन्द्रवृत्तौ
ग्रन्थितत्त्वपरीक्षाप्रकरणं नवमम् ॥ ९ ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

### ( दशमः पटलः )

युक्त्यागमाभ्यां ग्रन्थितत्त्वमुपपाद्य, तत्कार्यभूतं कलादिकमभिधातुं तच्छेषभूतं प्रकरणान्तरमाह । अस्य च प्राक्तनमेव संबन्धपञ्चकं ज्ञेयम् ।

ग्रन्थिजन्यं कलाकाल-
विद्यारागनृमातरः ।
गुणधीगर्वचित्ताक्ष-
मात्राभूतान्यनुक्रमात् ॥ १ ॥

मायातत्त्वात्प्रथमतः कलाभिधेययोः कलानियत्योः, कालस्य, नृशब्देनोक्तस्य पुंसश्च पुंस्प्रत्ययहेतोस्तत्त्वविशेषस्याभिव्यक्तिः, कलातत्त्वात्तु विद्यारागाव्यक्तानां, मातृशब्देन च प्रकृतिरव्यक्ताख्या तत्सकाशाद्गुणाः, तेभ्यो बुद्धिः, तस्या अहङ्कारः, तस्मात्तैजसाद्बुद्धीन्द्रियाणि मनश्च,

वैकारिकात्कर्मेन्द्रियाणि, भूतादिसंज्ञात् मात्राशब्देनोद्दिष्टानि तन्मात्राणि, तेभ्यो भूतानीत्यस्मादनुक्रमादेतद्ग्रन्थितत्त्वतोऽभिव्यङ्ग्यम् ॥१॥

विधत्ते देहसिद्ध्यर्थं
यत्साक्षाद्यत्पदान्तरात् ।
यथा युनक्ति यद्धेतो-
स्तादृक्तदधुनोच्यते ॥ २ ॥

अशुद्धाध्वन्यधिकृतोऽनन्तेशनाथ आत्मनां देहादिक्लृप्त्यै ग्रन्थितत्त्वात् यत् साक्षादव्यवधानेन कलादिकार्यं व्यनक्ति, यच्च पदान्तरात् स्थानान्तरात् कलादेर्विद्यारागादि व्यनक्ति, तद्यस्मात्कारणादभिव्यक्तं पदार्थं येन वा प्रकारेण युनक्ति देहादिसिद्धौ योजयति, तत्तादृगिदानीं कथ्यते ॥ २ ॥

कर्तृशक्तिरणोर्नित्या
विभ्वी चेश्वरशक्तिवत् ।
तमश्छन्नतयार्थेषु
नाभाति निरनुग्रहा ॥ ३ ॥

तदनुग्राहकं तत्त्वं
कलाख्यं तैजसं हरः ।
मायां विक्षोभ्य कुरुते
प्रवृत्त्यङ्गं परं हि तत् ॥ ४ ॥

अणोरात्मनः शिवशक्तिवद्यद्यपि नित्या व्यापिका च कर्तृशक्तिर्मुक्तौ तथाविधत्वसंश्रवणात्, तथाप्यनादिमलावृतत्वात् करणीयेष्वर्थेषु न निरनुग्रहा सा आभाति । तस्या अनुग्राहकं समर्थकं कलाख्यं तत्त्वं, हरति भोगमुक्त्यर्थमधोवर्तिनोऽणूनिति, हरोऽनन्तेशः मायां विक्षोभ्य प्रसवोन्मुखीं कृत्वा कुरुते अभिव्यनक्तीत्यर्थः । यस्मात्कलाख्यं तत्त्वं परं प्रवृत्त्यङ्गमात्मनः कर्तृस्वरूपसमर्थनं, तेनैव व्यापृतत्वात् । नह्यसौ तेनानुत्तेजितकर्तृभावः प्रवर्तितुं शक्तः स्यात् । तैजसत्वं चास्य सहजमलतिरस्करणेनाणोरेकदेशेन प्रकाशनहेतुत्वात् ॥ ४ ॥

एतदेवाह

तेन प्रदीपकल्पेन
तदास्वच्छचितेरणोः ।

प्रकाशयत्येकदेशं
विदार्य तिमिरं घनम् ॥ ५ ॥

स एष प्रागुक्तो महेश्वरस्तदा तस्मिन् मायाप्रसवाभिमुख्यकालेऽतिमलिनचिच्छक्तेरात्मनस्तेन तैजसेन कलाख्येन तत्त्वेन किंचिदप्रकाशकारित्वाद्दीपप्रायेण निबिडं तमो निर्भिद्यैकदेशं प्रकटयति मलावच्छिन्नां कर्तृतां समुपोद्बलयतीति यावत् । कलाशब्देनोद्देशसूत्रे नियतिरपि लाघवादुपक्षिप्ता ॥ ५ ॥

तयोश्च कलानियत्योरन्वर्थकलाशब्दाभिधेयतां वक्तुमाह

कल इत्येष यो धातुः
संख्याने प्रेरणे च सः ।
प्रोत्सारणं प्रेरणं सा
कुर्वती तमसः कला ॥ ६ ॥

कल इत्येष संख्यानार्थवृत्तिरेको धातुः । कल क्षेप इति प्रोत्सारणार्थवृत्तिरन्यो धातुः । तत्रैकदेशे तमसो मलस्य क्षेपणं प्रोत्सारणं कुर्वा-

णायाः कलायाः क्षेपार्थवृत्तिप्रकृतिभूतः प्रथमः, द्वितीयस्तु संख्यानार्थवृत्तिः कलनादियत्तथा नियमनात् कलाशब्दापरपर्याया नियतेः ॥६॥

इदानीमात्मनः कलायाश्च कर्तृकारकतामभिधातुमाह

इत्येतदुभयं विप्र
संभूयानन्यवत्स्थितम् ।
भोगक्रियाविधौ जन्तो-
र्निजगुः कर्तृकारकम् ॥ ७ ॥

जन्तोरनासादितभोगस्याणोर्यो भोगक्रियाविधिस्तस्मिन्नुत्पाद्ये, इति अनेन प्रागुक्तेन प्रकारेण, एतत् आत्मकलाख्यं कर्तृकारकं निजगुरुपदिदिशुर्गुरवः । तैर्हि भोक्तृतया कर्तृत्वेनात्मोक्तः, तस्य कर्तृशक्तेरुपोद्बलकत्वात्कारकं हेतुः कर्त्री कला

'प्रयोक्त्र्यादि महीप्रान्तम्············ ।' (१२ पट०)

इत्यादिना तस्या एव प्रयोक्तृशब्देन वक्ष्यमाणत्वात् । कथं चैतद्द्वयं स्थितमित्याह 'संभूयान-

न्यवत्' एकीभूयालक्षितव्यतिरेकमिति यावत्। उक्तं च बृहस्पतिपादैः

'जन्तोर्विभात्यतिश्लेषात्सा द्वितीयेव चेतना ।'

इति । विप्रेत्यामन्त्रणेन वक्ता श्रोतारं मुनिमवहितं करोति ॥ ७ ॥

विद्यातत्त्वस्य व्यापारं वक्तुमाह

एवं व्यक्तक्रियाशक्ति-
दिदृक्षुर्गोचरं दृशः ।
भजत्यनुग्रहापेक्षां
स्वयं द्रष्टुमशक्नुवन् ॥ ८ ॥
तदर्थं क्षोभयित्वेशः
कलामेव जनिक्षमाम् ।
तत्त्वं विद्याख्यमसृज-
त्करणं परमात्मनः ॥ ९ ॥

उक्तेन प्रकारेण व्यक्ता क्रियाशक्तिर्यस्य स तथाविधोऽणुर्गोचरं प्रतिबिम्बितविषयं बुद्ध्याख्यं द्रष्टुमिच्छुर्दृशो ज्ञानस्यानुग्रहापेक्षां भजते ज्ञानशक्त्यनुग्रहमपेक्षत इति तात्पर्यम् । स्वयं द्रष्टुमशक्नुवन्निति विशेषणभावेन हेतूपन्यासः

स्वयं बोद्धुमसमर्थत्वादित्यर्थः । तदर्थमनन्तेशः कलां तत्त्वाविर्भावनसहां प्रक्षोभ्य जन्यजननाभिमुखीं कृत्वा आत्मनः परं प्रकृष्टं करणं विद्याख्यं सृष्टवान् । परत्वं चास्य साक्षात्साध्यस्यैवोपकारकत्वात् तदुत्तेजितज्ञानशक्तेरन्तःकरणवहिष्करणैर्योग इति तेषामपरत्वम् ॥९॥

यदुत

तेन प्रकाशरूपेण
ज्ञानशक्तिप्ररोचिना ।
सर्वकारकनिष्पाद्य-
मवैति विषयं परम् ॥ १० ॥

तेन विद्याख्येन तत्त्वेन प्रकाशकत्वात् ज्ञानशक्त्यभिव्यञ्जकेन सर्वैर्बुद्धीन्द्रियैः कर्मेन्द्रियैर्यथास्वं निर्वर्त्यं परं कर्तृविषयात् कार्यात्मकविषयात् अन्यत् ज्ञेयाख्यं, यद्वा परमिति अव्यवहितं विषयं प्रतिबिम्बितबाह्यविषयत्वेन संनिकृष्टं बुद्धितत्त्वमवैति जानाति । विद्याख्येन करणेन किल प्रतिबिम्बितस्रक्चन्दनादि-

बाह्यविषया भोग्यरूपा बुद्धिर्गृह्यते । यदाह खेटकनन्दनः

'बुद्धिर्विषयाकारा सुखादिरूपा समासतो भोग्या ।'
( त० सं० १३ )

इति । तथा

'रविवत्प्रकाशरूपो यदि नाम महांस्तथापि कर्मत्वात् ।
करणान्तरसापेक्षः शक्तो ग्राहयितुमात्मानम् ॥' (त०सं० १४)

इति ॥ १० ॥

रागतत्त्वाभिव्यक्तिमाह

तदभिव्यक्तचिच्छक्ति-
दृष्टार्थोऽप्यपिपासितः ।
नैति तं जनकं रागं
तस्मादेवासृजत्प्रभुः ॥ ११ ॥

तेन विद्याख्येन तत्त्वेनाभिव्यक्तज्ञानशक्तित्वात् दृष्टार्थोऽप्यणुरपिपासितोऽसंजाताभिलाषः सन् नैति न भोग्याहरणाय गच्छति । अतस्तस्याभिलाषस्य जनकं रागं तत एव कलातत्त्वात्प्रभवनशीलोऽनन्तेशनाथः ससर्ज ॥ ११ ॥

स तेन रञ्जितो भोग्यं
मलीमसमपि स्पृहन् ।

आदत्ते नच भुञ्जानो
विरागमधिगच्छति ॥ १२ ॥

तेन रागेण रञ्जितो जनिताभिष्वङ्गः सोऽणुर्मलिनतममपि मायीयभोग्यमभिलषन्नुपाहरति, नचैवमुपभुञ्जानो विरज्यते । चुरादीनामणिजन्तत्वाच्च स्पृहन्नित्यदुष्टम् ॥ १२ ॥

कालतत्त्वनिरूपणायाह

इति प्रवृत्तः करणैः
कार्यरूढैः सभौवनैः ।
भोगभूमिषु ना भुङ्क्ते
भोगान्कालानुवर्तिनः ॥१३॥

इति एवमुक्तनीत्या कलोत्तेजितकर्तृत्वः सन् प्रवृत्तो भोगोद्युक्तः ना पुरुषः कालेनानुवर्तिनस्तासु तासु भोगभूमिषु सुखदुःखादिरूपान् भोगान् भुङ्क्ते । कैर्भुङ्क्ते इत्याह भौवनदेहसहितैः करणैर्बुद्धीन्द्रियैः कर्मेन्द्रियैस्त्रिविधेनान्तःकरणेन । मलिनत्वात् क्रियाज्ञानशक्त्योः कर्मेन्द्रियबुद्धीन्द्रियाणामपेक्षा । कीदृशैः करणैरित्याह कार्यरूढैरविभुत्वतो निराश्रयाणामेषां चेष्टाद्य-

योगात् भूततन्मात्रात्मककार्याश्रयस्थैः सद्भिः। उक्तं च खेटकनन्दनेन

'एतत्कार्यं दशधा करणैराविश्य कार्यते चेष्टाम् ।
अविभुत्वात्करणानि तु कार्यमधिष्ठाय चेष्टन्ते ॥' (त० सं० ४)

इति ॥ १३ ॥

अथ कोऽसौ कालो नाम, कुत उत्पन्नः, किं वा करोतीति । अत्रोच्यते

त्रुट्यादिप्रत्ययस्यार्थः
कालो मायासमुद्भवः ।
कलयन्ना समुत्थाना-
न्नियत्या नियतं पशुम् ॥१४॥

त्रुटिलवनिमेषमुहूर्तादेः प्रत्ययस्य ज्ञानस्यार्थो निमित्तं यः, स कालः । 'स मुहूर्तमास्ते, प्रहरं भ्राम्यति' इत्यादिप्रतीतिरजस्रपरिवर्तिनो यस्माद्भवति, स मायात उत्पन्नः पशुत्वेन मलेन युक्तमात्मानं कलयन् काल इत्युच्यते । यदाहुः

'जलयन्त्रभ्रमावेगसदृशीभिः प्रवृत्तिभिः ।
स कालः कलयंस्तावत्कालाख्यां लभते ततः ॥'

इति । कीदृशं पशुं कलयन्नित्याह आ समुत्थानान्नियत्या नियतं, नियतेः समुत्थानं स्वकार-

णादभिव्यक्तिः, तत आरभ्य यावत्संहारमसौ पशुं कर्मजनिते सुखदुःखोपभोगे नियच्छति । नचायं कालस्य व्यापारस्तस्य कलनमात्र चरितार्थत्वात् ॥ १४ ॥

अत्र पराशङ्का

ससाधनस्य भोगस्य
कर्मतन्त्रतया जगुः ।
केचिन्नियामकं कर्म
यदन्यदतिरिच्यते ॥ १५ ॥

अवश्यं तावद्भोगस्तत्साधनानि च भोक्तुः कर्माधीनानि तदपेक्षां विना भोगवैचित्र्यस्यानुपपत्तेरित्युक्तम् । तन्नियामकत्वं च तस्यैव भविष्यति । ततश्च यदन्यन्नियत्याख्यं तत्त्वं कल्प्यते, तदतिरिच्यते निष्प्रयोजनत्वात्तदधिकीभवति । तथाचोक्तं

'यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ॥'

अथात्र परिहारः

भोगोऽर्थः सर्वतत्त्वानां
सोऽपि कर्मनिबन्धनः।
कर्मैवास्तु शरीरादि
ततः सर्वमपार्थकम्॥ १६॥

मा भून्नियतितत्त्वं, तदन्यान्यपि भोगसाधनानि तत्त्वानि कर्मनिबन्धनान्येव, तेषां चावश्यं कर्मापेक्षित्वात् कर्मैव केवलं भोगसाधनमस्तु यद्विना अन्यानि अकिञ्चित्कारीणि। तथाच सति शरीरेन्द्रियविषयादेः सर्वस्यानर्थक्यम्॥ १६॥

अथ देहादिसापेक्षं
तत्पुमर्थप्रसाधकम्।

ननु देहादिसव्यपेक्षं कर्म पुरुषार्थसाधनसमर्थं, न केवलम्। नह्येकं जनकं, किं तर्हि, सामग्र्येव कार्यजनिकेति॥

अत्रोच्यते

ततो नियतिसापेक्ष-
मस्तु कर्म नियामकम्॥ १७॥

एवं तर्हि यथा देहेन्द्रियादिभिः स्वस्वव्यापारप्रवृत्तैः सह कर्म पुरुषार्थसाधनक्षमम्, एवं स्वकार्यनिष्पादकनियतितत्त्वसापेक्षं तत् नियामकमस्त्विति न कश्चिद्दोषः ॥ १७ ॥

पुंस्तत्त्वं तत एवाभूत्
पुंस्प्रत्ययनिबन्धनम् ।
आपूरकं प्रधानादे-
र्भौवने रुद्रसंश्रयम् ॥ १८ ॥

संहारसमये यदनन्तेशनाथेन विश्रामितं, ततः तस्मादेव मायातत्त्वात्पुंस्तत्त्वमाविरभूदित्यर्थः । पुंस्प्रत्ययनिबन्धनमिति पुंस्प्रतीतेर्हेतुः, अनेन मायागर्भस्थेभ्योऽधिकारिरुद्राणुभ्यस्तत्तद्भुवननिवासिभ्यश्च वैलक्षण्यमुक्तं तेषां पुंस्प्रत्ययायोगात् । तच्च पुंस्तत्त्वं प्रधानादेस्तत्त्वव्रातस्यापूरकं पुरुषार्थत्वेन कार्यसहितस्य प्रधानस्येष्टत्वात् । एवं छात्रहेतुकत्वादध्ययनस्य 'छात्रा अध्यापकाः' इत्यादिवदापूरकशब्दो ज्ञेयः । भौवने चाध्वनि तत् पुंस्तत्त्वं रुद्रसंश्रयम् । तथाचोक्तं श्रीमत्स्वतन्त्रे

'अतः पुरुषतत्त्वे तु भुवनानि निबोध मे ।
दिव्याम्भः सलिलौघे च............ ॥' (१०।१०६६)

इत्यादि । पुंरागसंपुटितरूपं च एतत्पुरुषतत्त्वं रुद्राणामाश्रयत्वेनेष्टम् । यथोक्तं श्रीमत्किरणे

'वामदेवोऽथ भीमश्चाप्युग्रश्च भवसंज्ञकः ।
सर्वेशानैकवीरौ च प्रचण्डश्चेश्वरः पुमान् ॥
उमाभर्ता ह्यजोऽनन्त एकश्चैव शिवस्ततः ।
रागतत्त्वे स्थिता ह्येते रुद्रास्तीव्रबलोत्कटाः ॥
अत्रैव पुरुषो ज्ञेयः प्रधानगृहपालकः ।

इति ॥ १८ ॥

ततः प्राधानिकं तत्त्वं
कलातत्त्वादजीजनत् ।
सप्तग्रन्थिनिदानस्य
यत्तद्गौणस्य कारणम् ॥ १९ ॥

ततो मायातः पुंस्तत्त्वप्रसवादनन्तरं कलातत्त्वादव्यक्तं तत्त्वमुदपद्यत । कीदृगित्याह सप्तग्रन्थिनिदानस्य इत्यादि, यत्प्रधानं महदहङ्कारयोस्तन्मात्रपञ्चकस्येत्येवं सप्तानां ग्रन्थीनां कार्ययोनीनामुद्भवहेतोर्गौणस्य तत्त्वस्य कारणम् । यथाहि तस्य तस्य काञ्चनरत्नादेरुत्तरकालभा-

विन्यः करिपुरुषतुरङ्गादिरूपाः कटककुण्डलाद्या-
भरणात्मिका वा अर्थक्रियाः शक्तिरूपतया
स्थिताः, एवं शक्त्यात्मना स्थितस्वस्वकार्यजन-
कतन्मात्रादिग्रन्थिसप्तककारणस्य गुणतत्त्वस्या-
व्यक्तादुद्भवः ॥ १९ ॥

ततो बुद्ध्याद्युपादानं
गौणं सत्त्वं रजस्तमः ।
तद्वृत्तयः प्रकाशाद्याः
प्रसिद्धा एव भूयसा ॥ २० ॥

तत इति तस्मात्प्राधानिकात्तत्त्वात् वक्ष्यमा-
णभावप्रत्ययसहिताया बुद्धेरुद्भवहेतुर्गौणं तत्त्वं
सत्त्वरजस्तमोरूपमजीजनदिति पूर्वेण संबन्धः।
तेषां च सत्त्वादीनां प्रकाशप्रवृत्तिनियमा-
त्मिकास्तिस्रो वृत्तयो बाहुल्येन प्रथिता इतीह
नोक्ताः ॥ २० ॥

त्रयो गुणास्तथाप्येकं
तत्त्वं तदवियोगतः ।
एकैकश्रुतिरेतेषां
वृत्त्याधिक्यनिबन्धना ॥ २१ ॥

त्रित्वेऽपि परस्पराबियोगाद्गुणतत्त्वमेकं ज्ञेयम् । ननु

'ये चैके सात्त्विका भावा राजसा ये च तामसाः ।'

इत्यादौ भिन्नमेषां सत्त्वादीनां कार्यं श्रूयते, न त्ववियोगादेकमेतत्तत्त्वमित्याह एकैकश्रुतिरित्यादि, एषां गुणानामिदं सात्त्विकमिदं राजसमिदं तामसमित्यादिका एकैकश्रुतिर्वृत्त्याधिक्यहेतुकी । अधिकवृत्ति सत्त्वं यस्य, स सात्त्विकः पदार्थः, एवं राजसतामसौ विज्ञेयौ ॥

न तदस्ति जगत्यस्मि-
न्वस्तु किञ्चिदचेतनम् ।
यन्न व्याप्तं गुणैर्यस्मि-
न्नेको वामिश्रको गुणः ॥ २२ ॥

अस्मिन् जगति तादृगचेतनं वस्तु न किञ्चिदप्यस्ति, यद्गुणैर्न व्याप्तं, यत्र वामिश्रकोऽन्यासंपृक्त एक एव सत्त्वादिर्गुणः । उन्मग्ननिमग्नादिवृत्तिसत्त्वादिगुणत्रयान्वितं सर्वं जगदिति तात्पर्यम् ॥ २२ ॥

एवं गुणतत्त्वमुक्त्वा बुद्धितत्त्वं वक्तुमाह

बुद्धितत्त्वं ततो नाना-
भावप्रत्ययलक्षणम् ।
परं तदात्मनो भोग्यं
वक्ष्यमाणार्थसंस्कृतम् ॥ २३ ॥

वक्ष्यमाणलक्षणा धर्मादयो भावास्तथा विपर्ययाशक्त्यादयः प्रत्ययाः, त एव लिङ्गं सत्तागमकं यस्य तत् अभिधास्यमानैरर्थैर्विषयैः संस्कृतमुपरक्तं बुद्धितत्त्वं परं प्रकृष्टमव्यवहितमात्मनो भोग्यं विषयाणां भोग्यत्वेऽपि तत्प्रतिबिम्बितत्वेनासन्निकृष्टत्वादपकृष्टत्वं यतः । उक्तं च तत्रभवत्सद्योज्योतिःपादैः

'बुद्धिर्विषयाकारा सुखादिरूपा समासतो भोग्या ।'
(त० सं० १३)

इति ॥२३॥

भावान्वक्तुमाह

भावा बुद्धिगुणा धर्म-
ज्ञानवैराग्यभूतयः ।

सात्त्विका व्यत्ययेनैते

रागमुत्सृज्य तामसाः ॥ २४ ॥

धर्मज्ञानवैराग्यैश्वर्याख्या बुद्धिगुणा भावसंज्ञया विज्ञेयाः

'भावयन्ति यतो लिङ्गं तेन भावा इति स्मृताः ।'

एते च सात्त्विका बोद्धव्याः । व्यत्ययेनं विपर्ययेणैते रागमुत्सृज्य वैराग्यविवर्जितास्तामसाः अधर्माज्ञानानैश्वर्यरूपाः । अवैराग्यलक्षणस्तु भावो राजसः ॥ २४ ॥

प्रत्ययान् संचष्टे

प्रत्ययास्तदुपादाना-

स्तेऽष्टौ नव चतुर्गुणाः ।

सप्त पञ्च च विख्याताः

सिद्ध्याद्या वर्गशो मुने ॥ २५ ॥

ते धर्मादय उपादानमुत्पत्तिहेतुर्येषां ते संसार्यणोः प्रत्यायनात्प्रत्यया इष्टाः । कियन्त इत्याह अष्टौ नवेत्यादि, अष्टविधा सिद्धिर्नवविधा तुष्टिर्वक्ष्यमाणलक्षणा । उक्तं च सांख्यैः

'ऊहः शब्दोऽध्ययनं दुःखविघातत्रयं सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ··················॥'(५१)

इति । तथा

'आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात्पञ्च च नव तुष्टयोऽभिहिताः ॥' (५०)

इति । चतुर्गुणाः सप्त अष्टाविंशतिसंख्या भवन्ति, तावत्संख्यसंख्याता शक्तिः । कर्मेन्द्रियबुद्धीन्द्रियमनसां विघाता एकादश

'बाधिर्यमान्ध्यमघ्रत्वं मूकता जडता च या ।
उन्मादकौष्ठ्यकौण्यानि क्लैब्योदावर्तपङ्गुताः ॥'

इति । बुद्धिवधाश्च प्रागुक्तानां तुष्टिसिद्धीनां विपर्ययाः सप्तदशेत्यष्टाविंशतिः । तथा चाहुः कापिलाः

'एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥' (४९)

इति । पञ्च च विख्याता इति, विपर्ययभेदास्तमोमोहमहामोहतामिस्रान्धतामिस्राख्याः । एते पञ्च, सिद्धयोऽष्टौ, तुष्टयो नव, अशक्तयोऽष्टाविंशतिरित्येवं वर्गशः वर्गक्रमेण पञ्चाशत्प्रत्ययाः ॥ २५ ॥

ये चैवं संख्यातः प्रतिपादिताः

भावाः सप्रत्ययास्तेषां
लेशाल्लक्षणमुच्यते ।

किं तदित्याह

सांसिद्धिका वैनयिकाः
प्राकृताश्च भवन्त्यणोः ॥२६॥

एते भावाः सांसिद्धिकादिभेदात्त्रिधा संसार्यणोर्भवन्ति ॥ २६ ॥

अथ तेषां सांसिद्धिकादीनां स्वरूपमभिधत्ते

विशिष्टधर्मसंस्कार-
समुद्दीपितचेतसाम् ।
गुणः सांसिद्धिको भाति
देहाभावेऽपि पूर्ववत् ॥ २७ ॥

विशिष्टेनेष्टापूर्तादिधर्मसंस्कारेण सम्यगुद्दीपितं चेतो येषां तेषां न परं देहसंयोगे यावद्देहाभावेऽपि प्राग्वद्यो गुणः प्रकाशते, स सांसिद्धिको नाम बोद्धव्यः ॥ २७ ॥

लोकधीगुरुशास्त्रेभ्यो
भाति वैनयिको गुणः ।

यस्तु सद्यथावद्धितलोकबुद्धेर्गुरुतः शास्त्राद्वा समर्जितः, स वैनयिको भाति प्रकाशते ॥

समर्जितो वैनयिको
मनोवाक्तनुचेष्टया ॥ २८ ॥

यो मनोवाक्तनुचेष्टया शुद्धव्यापारेणार्जितः, स वैनयिको बोद्धव्यः ॥ २८ ॥

प्राकृतो देहसंयोगे
व्यक्तः स्वप्नादिबोधवत् ।

यः पुनः स्वप्नमदमूर्छाप्रबुद्धस्य यथाप्रस्तुतसंस्कार इव देहसंयोग एव व्यज्यते, न देहापायेऽपि, स प्राकृतो नाम गुणो विज्ञेयः ॥

अथैतेभ्यः सांसिद्धिकादिभ्यो धर्मेभ्यः फलविशेषान्वक्तुमाह

स्वर्गो मुक्तिः प्रकृतित्वाविघातौ
योनिक्रान्तिर्निरयावाप्तिबन्धौ ।
रूपेष्वर्था विनयप्राकृतेषु
संपद्यन्ते सविघाताः क्रमेण ॥२९॥

तत्र तावद्वैनयिकेषु रूपेषु क्रमेणार्थाः संपद्यन्ते स्फीतिमुपयान्ति । के त इत्याह स्वर्ग इत्यादि, धर्मात्स्वर्गः, ज्ञानान्मुक्तिः, वैराग्यात्प्र-

कृतिलयः, ऐश्वर्याद्विघातः यथेष्टसिद्धिरित्यर्थः । अथाधर्मात्तिर्यगादियोनिक्रान्तिः, अज्ञानान्निरयावाप्तिः, अवैराग्याद्बन्धः, अनैश्वर्याद्विघातः ॥ २९ ॥

अथ सांसिद्धिकेषूच्यन्ते

वश्याक्रान्तिस्तत्परिज्ञानयोगो
भोगानिच्छा विघ्नसंघव्यपायः ।
भोगासक्तिर्न्यक्कृतिर्देहलब्धि-
र्विघ्नश्चार्थास्तेषु सांसिद्धिकेषु ॥३०

धर्मादिषु सांसिद्धिकेषु सत्स्विदमिदं संपद्यत इति पूर्वेण संबन्धः । किं किमित्यत्राह वश्याक्रान्तिरित्यादि, वश्याक्रान्तिः सांसिद्धिकाद्धर्मात्, तत्परिज्ञानयोगस्तादृग्विधाज्ज्ञानात्, भोगेष्वनभिलाषो वैराग्यात्, विघ्नसमूहापगम ऐश्वर्यात्, भोगेष्वासक्तिः सांसिद्धिकादधर्मात्, न्यक्कृतिर्न्यक्कारस्तथाविधादज्ञानात्, देहलब्धिरवैराग्यात्, कार्येषु विघ्नोऽनैश्वर्यादिति ॥ ३० ॥

इति श्रीभट्टविद्याकण्ठात्मजनारायणकण्ठकृतौ मृगेन्द्रवृत्तौ
मायाकार्यविचारप्रकरणं दशमम् ॥ १० ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

### ( एकादशः पटलः )

इत्थं भावान्विचार्य प्रत्ययान् प्रागुद्दिष्टान् लक्षयितुं समनन्तरोपसंहृतप्रकरणशेषभूतं प्रकरणान्तरमाह

अथ सिद्ध्यादिवर्गाणां
लेशात्सामान्यलक्षणम् ।
कथ्यते विप्लवो मा भूत्
समासोक्तेः प्रभेदशः ॥ १ ॥

अथेति भावोक्त्यनन्तरं प्रत्ययसंबन्धिनां सिद्धितुष्ट्यादिवर्गाणां संक्षेपात्साधारणं लक्षणं कथ्यते । किमर्थमित्याह विप्लवो मा भूदिति, प्रभेदशः प्रविभागशः वर्गशः या संक्षेपोक्तिः कृता, तस्याः सकाशाद्विप्लवो मतिसंमोहो मा भूत् । तेऽष्टौ नव चतुर्गुणाः सप्त पञ्च चेत्ये-

२९

तावता संक्षिप्तप्रभेदकथनेन बुद्धिविप्लवो यः शङ्क्यते, स एवंविधा तुष्टिरित्थंविधा सिद्धिरित्येवं सामान्यलक्षणे संक्षिप्ते कृते न भवतीत्येतदर्थमिदमित्यर्थः ॥ १ ॥

अथ तदुच्यते

पुंस्प्रकृत्यादिविषया
बुद्धिर्या सिद्धिरत्र सा ।
तुष्टिर्नुरकृतार्थस्य
कृतार्थोऽस्मीति या मतिः ॥२॥

पुंस्यात्मनि, प्रकृतावव्यक्ते आदिग्रहणाद्व्यक्ते च या बुद्धिर्विज्ञानं, सा सिद्धिरित्युच्यते। या त्वकृतार्थस्य नुः पुंसः कृतार्थोऽस्मीति बुद्धिः, सा तुष्टिः ॥ २ ॥

अशक्तिः कारकापाये
सदर्थाप्रभविष्णुता ।
किञ्चित्सामान्यतोऽन्यत्र
मतिरन्या विपर्ययः ॥ ३ ॥

कारकाणामन्तःकरणबहिष्करणानामपाये विनाशे सति विद्यमानेऽप्यर्थे अप्रभवणशील-

त्वमशक्तिरन्धबधिरादेरिव रूपशब्दादौ । किञ्चित्साधारण्यादन्यस्मिन्नन्यादृशी बुद्धिर्विपर्ययः मरुमरीचिकास्विव जलावगतिः ॥ ३ ॥

प्रकाशकतया सिद्धि-
र्व्यक्तादेः सत्त्वभावजा ।
प्रकाशार्थप्रवृत्तत्वा-
द्रजोंशप्रभवापिच ॥ ४ ॥

सैषा सिद्धिर्व्यक्त्यादिप्रकाशकत्वात् सात्त्विकी सत्त्वस्य प्रकाशस्वरूपत्वात् । किंच प्रकाशार्थप्रवृत्ततया हेतुभूतया रजोंशप्रभवाप्यसौ सिद्धिर्ज्ञेया । नह्यमिश्रा गुणा जनका इत्युक्तम् ॥ ४ ॥

यतः

तुष्टिर्मिथ्यास्वरूपत्वा-
त्तमोगुणनिबन्धना ।
सुखरूपतया ब्रह्म-
न्सात्त्विक्यप्यवसीयते ॥ ५ ॥

अकृतार्थस्य कृतार्थोऽस्मीति बुद्धिस्तुष्टिर्योक्ता, सेयं मिथ्यारूपत्वात् तमोगुणलक्षणा, सुखरूपतया सात्त्विक्यप्यवगम्यते ॥ ५ ॥

अशक्तिरप्रवृत्तत्वा-
त्तामसी दुःखभावतः ।
राजस्यपि गुणो दृष्टः
कार्ये कारणसंश्रयः ॥ ६ ॥

अप्रवृत्तिरूपा अशक्तिरुक्ता । अतश्चासौ तामसी, दुःखहेतुत्वाच्च राजस्यपि विज्ञेया । यो हि कार्येऽशक्त्याख्ये दुःखरूपोऽप्रभविष्णुतारूपो वा गुणोऽस्ति, सोऽवश्यं कारणाश्रयः रजस्तमोलक्षणकारणजनित इत्यर्थः ॥ ६ ॥

विपर्ययस्तमोयोनि-
र्मिथ्यारूपतया स च ।
सामान्यमात्रकाभासा-
त्सत्त्वात्मेति विनिश्चितः ॥७॥

विपर्ययस्य मिथ्यारूपत्वात् तमःप्रभवत्वम् । स च विपर्ययः साधारण्यमात्रप्रथनात्प्रकाशरूपः सत्त्वात्मकोऽपि निश्चितः ॥ ७ ॥

उपसंहरन्नाह

इति बुद्धिप्रकाशोऽयं
भावप्रत्ययलक्षणः ।
बोध इत्युच्यते बोध-
व्यक्तिभूमितया पशोः ॥ ८ ॥

इति एवंप्रतिपादितो भावप्रत्ययलक्षणो बुद्धिप्रकाशः पशोः संसार्यणोः बोधव्यक्त्याश्रयत्वाद्बोधसंज्ञयोच्यते ॥ ८ ॥

अथात्र मुनिः सांख्यच्छायया प्रश्नयति

बुद्धिर्बोधनिमित्तं चे-
द्विद्या तद्व्यतिरिच्यते ।
रागोऽपि सत्यवैराग्ये
कलायोनिः करोति किम् ॥ ९ ॥

उक्तया नीत्या बोधनिमित्तत्वं बुद्धेर्यदुच्यते तद्विद्याया आनर्थक्यं तस्या अपि बोधहेतुत्वेनाभ्युपगमात् । यदि च सामान्यव्यापारत्वेऽपि तदभ्युपगमः, तदानवस्था । किंच अवैराग्यलक्षणे बुद्धिधर्मे रागरूपे सत्यपि कलाजन्मा रागः किं करोति, न किञ्चिदप्यस्य कार्य-

मवैराग्येणैवातिशयवता तत्प्रयोजनस्य सं-
पत्तेः ॥ ९ ॥

अथैतत्प्रतिक्षेपः

व्यञ्जकान्तरसद्भावे
व्यञ्जकं यद्यपार्थकम् ।
मनोदेवार्थसद्भावे
सति धीरप्यनर्थिका ॥ १० ॥

बोधव्यञ्जकविद्याख्यं तत्त्वं बुद्ध्यात्मकव्य-
ञ्जकान्तरसद्भावे सति यद्यनर्थकं, तर्हि भव-
तोऽपि कापिलस्य मनइन्द्रियलक्षणार्थसद्भावे
बुद्धिरप्यनर्थिका । तथाहि रूपादिग्राहकचक्षु-
रादिकरणावधातरि मनसि व्यञ्जकान्तरेण
बुद्ध्याख्येन किं प्रयोजनं मनोधिष्ठितैरिन्द्रियै-
रेव तत्तत्कार्यसिद्धेः ॥ १० ॥

अथैवं ब्रुवते केचि-
त्करणत्वविवक्षया ।
सोऽपि देवैर्मनःषष्ठैः
पक्षोऽनैकान्तिकः स्मृतः ॥ ११ ॥

अथ प्रोक्तवद्बुद्धेरप्यानर्थक्यप्रसङ्गतया व्यञ्जकान्तरसद्भावे व्यञ्जकस्यानर्थक्यं प्रसज्यत इत्येवं न पर्यनुयुज्यते, किंतु करणत्वविवक्षयैवं केचिद्ब्रुवते चोद्यं कुर्वन्ति—यद्युत बुद्ध्याख्ये करणे सत्यपि किं विद्याभिधानेन करणेन। यथोक्तं

'.................सा विद्या तत्परं करणम्।' (त० सं० १२)

इति। इहाप्युक्तं

'तत्त्वं विद्याख्यमसृजत्करणं परमात्मनः।' (१।१०।९)

इति। सोऽप्ययं पक्षो मनःषष्ठैर्बुद्धीन्द्रियैरनैकान्तिकः। तथाहि बुद्धीन्द्रियपञ्चकस्य स्वस्वविषयग्रहणक्रियायां करणस्य सतः षष्ठेन मनसा करणान्तरेणाङ्गीक्रियमाणेनानैकान्तिकीकृतमेतत्—यत्करणान्तरसद्भावे करणानर्थक्यमिति। प्रत्युत करणान्तरापेक्षस्य कासुचित्क्रियासूपलम्भः। उक्तं च श्रीमत्पराख्ये

'करणं करणापेक्षमाजाविभकरास्त्रवत्।'

इति। यथा चैषां श्रोत्रादीनां पञ्चानां मनःषष्ठत्वं करणत्वे सामान्येऽप्यात्मवादिभिरिष्टं, तथा बुद्धौ सत्यामपि तद्ग्राहिका विद्या सेत्स्यतीति न कश्चिद्दोषः॥ ११॥

एवं च पक्षद्वयेनाशङ्कितं चोद्यं समर्थ्य, पक्षान्तरेणाप्याशङ्कमानस्तद्दूषणायाह

अथैकविनियोगित्वे
सत्येकमतिरिच्यते ।
श्रोत्रदृक्पाणिपादादि
ततो भिन्नार्थमस्तु नुः ॥ १२ ॥

नन्वेकस्मिन्विषये विनियोगोऽस्ति यस्य स पदार्थ एकोऽन्यस्य एकविनियोगित्वे सत्यतिरिच्यते अधिकीभवति ध्वान्तध्वंसक्षममण्यालोकसंभव इव दीपः । ततश्च सुखदुःखमोहात्मकपुंभोगसाधनत्वं बुद्धेरेव पर्याप्तमतस्तदर्थमिष्यमाणायाः पुनरपि विद्याया आनर्थक्यमित्याशङ्क्यैतन्निरासः—श्रोत्रदृक्पाणिपादादीति, तत इति एवमभ्युपगमात्, एकविनियोगित्वे सत्येकस्यातिरेकत्वाङ्गीकरणे सतीत्यर्थः । नुरिति पशुत्वयोगिनो भोक्तुः पुंसः । यदुक्तं प्राक्

'भोगभूमिषु ना भुङ्क्ते भोगान्कालानुवर्तिनः ।' (१।१०।१३)

इति । तस्य नुः पुंसः श्रोत्रदृगादि पाणिपादादि च भवत्पक्षे भिन्नार्थमस्तु, एकविषयं मा भूत् ।

ननु केनोक्तं श्रोत्रदृगादेरेकविषयत्वं, नहि श्रोत्रग्राह्यमर्थं दृक् गृह्णाति, पाणिकार्यं वा पादः करोति पृथगर्थत्वेनैषां प्रातिस्विकस्वरूपत्वात्। सत्यं, किंतु भोगैकसाधनत्वविवक्षयैवमुक्तम्। तथाहि भोक्तुः पुंसः आम्रादिसौरभानुभवतस्तदन्वेषणोद्यमः, ततश्चाम्राः सन्तीति श्रवणात्तत्र प्रवर्तनं, दृशा तद्दर्शनं, रसनेन चास्वादनमित्येकविनियोगित्वमिन्द्रियाणामनुभूयमानमपि भवत्पक्षे न युक्तमभ्युपगन्तुमानर्थक्यभयात्। ततश्च भिन्नार्थमेव श्रोत्रदृगादि पाणिपादादि च युष्मद्दृशा भवतु पुंभोगकार्यहेतुत्वेनाभिन्नविषयमपि भिन्नफलमस्त्वित्यर्थः। न चैवमित्थम्॥ १२॥

तृतीयमपि पराशङ्काप्रकारं परिहृत्य पराभिमतमेकविनियोगित्वं विद्याबुद्ध्योर्निराकर्तुमाह

न चैकविनियोगित्वं
विद्याबुद्ध्योः कथञ्चन।
विनियोगान्तरद्वारा
न दुष्टानेकसाध्यता॥ १३॥

नच विद्याया बुद्धेश्चैकार्थविनियोगित्वं भिन्नविषयत्वात्। विनियोगान्तरं च तत् द्वारं मुखं यस्याः सा मुखान्तरेणान्येन विनियोगेन प्रवृत्ता अनेकसाध्यता न दुष्टा यथा इन्धनोदकद्रव्याद्यनेकसाधनसाध्यायाः पाकक्रियायाः पृथक्प्रयोजनत्वे सति भिन्नकारकाभ्युपगमे न किञ्चिदपकृष्यते ॥ १३ ॥

अथ किं तद्भिन्नविषयत्वं विद्याबुद्ध्योरित्याह

विद्या व्यक्ताणुचिच्छक्ति-
नुन्नाक्षेशाक्षगोचरान् ।
स्वीकृत्य पुंस्प्रयुक्तस्य
करणस्यैति कर्मताम् ॥ १४ ॥
मतिस्तेनेतरा

विद्या तावत् व्यक्ताणुचिच्छक्तिः व्यक्ता उद्दीपिता अणोश्चिच्छक्तिर्यया, एतावदेवास्याः करणीयम् । ततस्तु नुन्नं प्रेरितमवधानेन नियोजितमक्षेशं मनो येषां तानि तथाविधानि यान्यक्षाणीन्द्रियाणि तद्गोचरांस्तद्विषयान् स्वीकृत्य, पुंस्प्रयुक्तस्येति पुंसा प्रकर्षेण युक्तस्य सा-

क्षात्स्वात्मन्येवोपकारकत्वेन स्थितस्यास्यैव वि-
द्याख्यस्य करणस्य बुद्धिर्यतः कर्मतामेति ग्राह्य-
त्वमागच्छति, तेनेतरा विद्या अतो दूरं भिन्ना ॥

तदियता विद्यावैधर्म्यं निराकृत्य, अथ द्वि-
तीयचोद्यस्य निरासः

रागो
न गौणस्तद्विधर्मतः ।
तच्च भोग्यत्वमेतद्वा
वीतरागस्ततो हतः ॥ १५ ॥

रागो न बुद्धिगुणोऽवैराग्यलक्षणः । कुत
इत्याह तद्विधर्मतः, तस्मादागमोक्ताद्रागात् गौ-
णस्य वैधर्म्यं यतः । लुप्तभावप्रत्ययो विधर्म-
शब्दः । किं तद्वैधर्म्यमित्याह तच्च भोग्यत्वमिति,
अवैराग्यलक्षणो बुद्धिधर्मः स्रक्चन्दनवनिता-
दिर्वा विषय एवं बहिष्ठो यः परेषां रागत्वेनेष्टः,
तस्यैतदेव वैधर्म्यं—यद्भोग्यत्वम् । भोगाभिष्वङ्ग-
हेतुना रागेण भोजकेन च भाव्यम् । नच भोग्य-
स्य भोगहेतोश्चाभेदः । एतद्वा भोग्यत्वं रागस्या-
ङ्गीक्रियते, तर्हि वीतरागस्ततो हतः, तत इति
एवमभ्युपगमाद्वीतरागाभावदोषः प्रसज्यते ।

भोक्तृगतरागानभ्युपगमे बहिष्ठवराङ्गनादिभोग्यविशेषरूपरागोपगमे च सति सरागवीतरागसंनिकर्षस्थस्रगादौ भोग्यविषये सर्वेषां सरागता प्राप्नोति, नहि कश्चिदत्र वीतरागो भवेत् । वस्तुतो वीतरागाणामपि भोग्यविशेषसंनिधिमात्रादेव सरागताया दृष्टत्वात् । उक्तं च सद्योज्योतिःपादैः

'भोग्यविशेषे रागे नहि कश्चिद्वीतरागः स्यात् ।'

(त० सं० १०)

इति । तस्माद्भोक्तृगत एव रागोपगमो, न भोग्यविशेषरूपः स्रगादिः अवैराग्यलक्षणबुद्धिधर्मात्मको वा ॥ १५ ॥

अतश्च

रागोऽर्थेष्वभिलाषो यो
न सोऽस्ति विषयद्वये ।

उक्तवद्भोक्तृगतो रागो योऽर्थेषु स्रगादिष्वभिलाष इत्यभिलाषहेतुरेवाभिलाषशब्देनोक्तः कारणे कार्यस्याभेदोपचारात् आयुर्घृतमितिवत्, स च रागाख्योऽर्थेषु अभिलाषरूपत्वादभिलाषहेतुर्विषयद्वये एकस्मिन्बाह्ये स्रक्चन्द-

नादौ वीतरागाभावप्रसङ्गतया नास्तीत्यभ्युपगन्तव्यः, द्वितीयस्मिंस्तु अवैराग्यलक्षणे बुद्धिधर्मे भोग्यरूपत्वादभिलाषहेतुत्वं नास्ति । तस्मादभिलाषहेतुना रागेण जन्यते असौ बुद्धिगतस्पृहात्मकः क्रियारूपो भोग्यत्वसंपादक इत्यलम् ॥

ननु कर्मैव सुखदुःखादिरूपभोग्येऽभिलाषहेतुत्वेन भविष्यतीत्याह

कर्मास्तु व्यापकं कल्प्यं
कल्पितेऽपीतरत्र यत् ॥ १६ ॥

प्रागुक्तेऽस्मिन् विषयद्वये सरागवीतरागात्मकस्थितिव्यवस्थापकत्वेन व्यापकं कर्मास्तु, यत् इतरत्रेति रागे परिकल्पितेऽपि कल्प्यं किलावश्यमभ्युपगन्तव्यम् । तद्धेतोरपि कर्मैष्टव्यम् । तदेव तत्तद्वस्तुवैचित्र्यात् सरागवीतरागताकारणत्वेनास्त्विति पूर्वः पक्षः ॥ १६ ॥

सिद्धान्तस्तु

कर्मणः केवलस्योक्तं
नियतावेव दूषणम् ।

केवलस्य कर्मणो नियतिसिद्धावेव दूषणं दर्शितम् । तथाचोक्तं

'भोगोऽर्थः सर्वतत्त्वानां सोऽपि कर्मनिबन्धनः ।
कर्मैवास्तु शरीरादि ततः सर्वमपार्थकम् ॥
अथ देहादिसापेक्षं तत्पुमर्थप्रसाधकम् ।
ततो नियतिसापेक्षमस्तु कर्म नियामकम् ॥' (१।१०।१६)

इति । तस्मात् तनुकरणभोगादिवैचित्र्यमात्र एव चरितार्थत्वात् कार्यान्तरे प्रमाणाभावाच्च न कर्मणो रागकार्यसंपादकत्वम्, अपितु उक्तप्रयोजनः कलाजन्यो रागः सिद्धः। नच रागवद्द्वेषस्यापि तत्त्वान्तरत्वं द्वेषादीनां रागजनितप्रवृत्तिविशेषात्मकत्वात् । कस्मिंश्चिदभिलषणीये वस्तुनि किल व्याहन्यमानेऽस्य द्वेषादयः संजायन्ते ॥

नन्वितरेतरोपमर्देन रागद्वेषयोर्यतोऽवस्थितिस्तस्मादेकस्मिन्पुंसि सहानवस्थानदोषः प्राप्नोतीत्याह

दोषः सहानवस्थानो
नासाम्याद्द्वेषरागयोः ॥ १७ ॥

सर्वस्य सर्वदा सर्वा
प्रवृत्तिः सुखबुद्धिजा ।
प्रवृत्तस्य सुखं दुःखं
मोहो वाप्युपजायते ॥ १८ ॥
प्रवृत्त्यनन्तरं द्वेषो
रागस्तत्पूर्वकालतः ।
द्वेषान्ते स पुनर्येन
वीर्यवद्योगकारणम् ॥ १९ ॥

कस्तावदयं सहानवस्थानदोषः, यद्येककालतया, तदेतन्न दूषणम्, अपितु भूषणमेव । नहि यदैव यत्र रागस्तदानीमेव तत्र द्वेषः । अथ यस्मिन्नेव भोक्तरि रागस्तत्र द्वेष इत्येतन्नोपपन्नं, तदप्ययुक्तम् । नहि अनयोराश्रये विरोधः, किंतु विषये । तुल्यबलत्वेन रागद्वेषयोः क्रमिकतया एकस्मिन्नाश्रये विषयव्यावृत्तौ न कश्चिद्दोषो भवद्भिरुद्भावितस्य सहानवस्थानस्येष्टत्वात् । तथाहि सर्वस्य व्यवहर्तुः सर्वा व्यवहृतिः सुखदुःखबुद्धिसंभवा । प्रवृत्तस्य चास्य सुखं वा दुःखं वा मोहो वा जायते । भोजना-

दिप्रवृत्त्यनन्तरं च तत्रैव द्वेषः, तत्पूर्वकालतस्तु रागः । पुनश्च द्वेषान्ते कस्मिंश्चित्काले तदभिलाषः । यस्माद्यदेव वीर्यवद्बलीयस्तदेव योगस्याभिष्वङ्गजनितस्य संश्लेषस्य कारणम् । यत एवं, तस्माद्रागस्य द्वेषाद्बलीयस्त्वात् सहानवस्थानदोषो न दोषः ॥ १९ ॥

इत्थं प्रासङ्गिकीं रागतत्त्वोपपत्तिमुक्त्वा, अहङ्कारतत्त्वव्यापारमाह

अथ व्यक्तान्तराद्बुद्धे-
गर्वोऽभूत्करणं चितः ।
व्यापाराद्यस्य चेष्टन्ते
शारीराः पञ्च वायवः ॥ २० ॥

अव्यक्ताद्व्यक्तं गुणतत्त्वं व्यक्तान्तरं, तत्कार्यं बुद्धिः, तस्याः सकाशादहङ्कारः चित आत्मनः संरम्भवृत्त्यन्तःकरणमुपपद्यते, यद्व्यापाराच्छारीराः शरीरान्तश्चराः पञ्च वायवश्चेष्टन्ते स्वं स्वं व्यापारं विदधति ॥ २० ॥

के त इत्याह

प्राणापानादयस्ते तु
भिन्ना वृत्तेर्न वस्तुतः ।

प्राणापानादयो ये पञ्च वायवस्ते वृत्तेर्व्यापारभेदाद्भिन्नाः । नत्वेषां वास्तवो भेदः वायुरूपत्वाविशेषात् ॥

अथैषामेव व्यापारभेदं वक्ति

वृत्तिं क्लेशान्निगदतो
भरद्वाज निबोध मे ॥ २१ ॥

तत्र का प्राणस्य वृत्तिरित्याह

वृत्तिः प्रणयनं नाम
यत्तज्जीवनमुच्यते ।
यत्तदूहं मतिः पुंसां
भ्रमत्यन्धेव मार्गती ॥ २२ ॥
तत्कुर्वन्नुच्यते प्राणः
प्राणो वा प्राणयोगतः ।
चित्यातिवाहिके शक्तौ
प्राणशब्दः कलासु च ॥ २३ ॥

प्रकर्षेण नयनं प्रणयनम् । कोष्ठस्थस्य वायोर्बाह्यद्वादशान्तं यावत् यत् प्रापणं, सैषा प्राणस्य वृत्तिर्व्यापारः । एतच्च व्यापारतो निर्वचनम् ।

फलतस्तूच्यते—यत्तज्जीवनं नाम सा प्राणस्यैव वृत्तिः, अयमाशयः—प्रणयनात् प्राण इति निरुक्तदृशा व्यापारेण प्राणशब्दो लक्षितः, प्रकर्षेण अननं प्राणनं जीवनं ततोऽपि प्राण इत्युच्यत इति फलविषयमस्य निर्वचनम् । फलतस्तूच्यते—यत्तत् पुरुषाणामूहं मार्गयमाणा अन्धेव मतिर्भ्रमति, स प्राणस्यैव व्यापारः । ऊहो विमर्शात्मकस्तर्कः, तत्रास्या धियः प्राणेनैव प्रेरणं क्रियते । प्राणरथाधिरूढा हि सा संविद्विमृशति । प्राणो वा बलं तद्योगात्प्राण उच्यते । तस्माच्चिति चैतन्ये, आतिवाहिके कलादिक्षित्यन्ते तत्त्वशरीरे, शक्तौ च बलात्मिकायां, कलासु च सोमसूर्याद्यात्मिकासु प्राणशब्दो ज्ञेयः ॥ २३ ॥

अपानस्य वृत्तिमाह

तथापनयनं भुक्त-
पीतविण्मूत्ररेतसाम् ।
कुर्वन्नपानशब्देन
गीयते तत्त्वदर्शिभिः ॥ २४ ॥

अपनयनमधःप्रापणं भुक्तपीतविण्मूत्ररेतसां यत् करोति, अतस्तत्त्वज्ञैरपानाख्ययोक्तः ॥

अथ समानव्यानयोर्व्यापारोक्तिः

समन्ततोऽन्नपानस्य
समत्वेन समर्पणम् ।
कुर्वन्समान इत्युक्तो
व्यानो विनमनात्तनोः ॥ २५ ॥

अन्नपानस्य सर्वत्र साम्येन नियमनात्समानस्य समानत्वं, देहस्य विनमनाद्व्यानस्य व्यानता ॥ २५ ॥

उदानस्य वृत्तिरुच्यते

विवक्षायत्नपूर्वेण
कोष्ठव्योमगुणध्वनेः ।
वागिन्द्रियसहायेन
क्रियते येन वर्णता ॥ २६ ॥
स उदानः शरीरेऽस्मि-
न्स्थानं यद्यस्य धारणे ।
जयः फलं वाच्यशेषं
पत्या स्कन्धान्तरेरितम् ॥ २७॥

वक्तुमिच्छा विवक्षा, यत्नः संरम्भः, तौ पूर्वौ यस्य तेन। कोष्ठस्य व्योम्न आन्तरस्याकाशस्य गुणरूपो यः शब्दस्तस्य येन वागिन्द्रियसचिवेन विवक्षायत्नपूर्वेण विभज्य वैचित्र्यं क्रियते सोऽस्मिन्देहे उदानशब्दात् ज्ञेयः। यस्य च वायोः प्राणादेर्यत्स्थानं, धारणे सति जयश्च, तज्जयात् फलं, तदेतद्वक्तव्यशेषभूतं भगवता प्रकरणान्तरेण योगपादाख्येनादिष्टम् ॥ २७ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठकृतौ मृगेन्द्रवृत्तौ प्रत्ययादिविचारप्रकरणमेकादशम् ॥ ११ ॥



अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

(द्वादशः पटलः)

इदानीमहङ्कारस्य त्रैरूप्यं तत्कार्याणि तद्विचारश्च प्रस्तूयत इति प्रकरणान्तरारम्भः । प्राग्वत्संबन्धपञ्चकमत्राप्यनुसन्धेयम् ।

अथ शेषार्थसिद्ध्यर्थं
स्कन्धानस्यात एव सः ।
त्रीन्निश्चकर्ष सत्त्वादि-
भूयिष्ठानीशशक्तिगः ॥ १ ॥

अथानन्तरं शेषभूतस्यार्थस्य तन्मात्रेन्द्रियादेः सिद्ध्यर्थमस्याहङ्कारस्य अत एवेति अहङ्कारादेव स भगवान् अनन्तरप्रकरणान्ते पतिशब्देनोक्तो यः, स मायागर्भाधिकारिणामनन्तादीनामीशानां शक्तिगस्तदभिव्यक्तशक्तिः सत्त्वरजस्तमोबहुलान् त्रीन् स्कन्धान्निश्चकर्ष

निष्कृष्टवान् अविभिन्नमहङ्कारमाविर्भाव्य त्रिधा व्यभजदित्यर्थः ॥ १ ॥

तदेव त्रैविध्यमाह

तैजसो वैकृतो योऽन्यो
भूतादिरिति संस्मृतः ।
तेभ्यः समात्रका देवा
मात्रेभ्यो भूतपञ्चकम् ॥ २ ॥

तैजसवैकारिकभूतादिकसंज्ञकेभ्यस्तेभ्योऽहङ्कारस्कन्धेभ्यो देवा बुद्धीन्द्रियकर्मेन्द्रियाख्याः समात्रकास्तन्मात्रसहिताः, तन्मात्रेभ्यश्च भूतपञ्चकमभिव्यक्तमिति शेषः ॥ २ ॥

अथ कुतः किमभिव्यक्तम् । आह

श्रोत्रं त्वक्चक्षुषी जिह्वा
नासा च मनसा सह ।
प्रकाशान्वयतः सात्त्वा-
स्तैजसश्च स सात्त्विकः ॥ ३ ॥

श्रोत्रादिबुद्धीन्द्रियपञ्चकस्य मनसश्च प्रबोधवत्त्वात् प्रकाशान्वयोऽस्ति, अतः सात्त्विका

एते देवाः । स च सात्त्विक एव । तत्प्रकृतिरहङ्कारस्कन्धस्तैजसो नाम ज्ञेयः ॥ ३ ॥

वाणी पाणी भगः पायुः
पादौ चेति रजोभुवः ।
कर्मान्वयाद्रजोभूयान्
गणो वैकारिकोऽत्र यः ॥ ४ ॥

वाक्पाणिपादपायूपस्थाः पञ्च राजसा देवाः । तेषां कर्मान्वयात् कर्मेन्द्रियत्वात् रजोबहुलो वैकारिकाख्योऽहङ्कारस्कन्धः प्रकृतिभूतः ॥ ४ ॥

शब्दः स्पर्शश्च रूपं च
रसो गन्धश्च पञ्चमः ।
गुणाविशिष्टास्तन्मात्रा-
स्तन्मात्रपदयोजिताः ॥ ५ ॥

शब्दस्पर्शरूपरसगन्धा अविशिष्टगुणा अनभिव्यक्तविशेषत्वेन तावन्मात्रपदे भूतप्रकृतित्वरूपे योजितास्तन्मात्राशब्देन ज्ञेयाः । तावत्यश्च मात्रास्तन्मात्रा इति स्त्रीलिङ्गोऽयमिह तन्मात्राशब्दः । गुणाविशिष्टत्वं चैतासामित्थम्—यथा पृथिव्यां खटखटादिरूपः शब्दः, स्प-

र्शश्च शीतोष्णः, रूपमपि अनेकविधं शुक्लादि, षड्विधश्च रसो गन्धश्च सुरभ्यसुरभिरूपोऽस्ति । नैवं तत्कारणभूतपृथिवीतन्मात्रावस्थिता विशेषा उपलभ्यन्ते, अपितु अविशिष्टगुणपञ्चकमात्रं पृथिवीतन्मात्रमेव मन्यते ॥ ५ ॥

एताश्च तन्मात्राः

प्रकाशकर्मकृद्वर्ग-
वैलक्षण्यात्तमोभवाः ।

प्रकाशकृत् सात्त्विको बुद्धीन्द्रियमनोलक्षणो यो वर्गः, यश्च कर्मकृत् राजसत्वाद्व्यापारप्रवृत्तः कर्मेन्द्रियवर्गः, ताभ्यां वर्गाभ्यां वैलक्षण्यं वैसादृश्यं यस्मादेतासां तन्मात्राणामतस्तमोभवा एताः ॥

प्रकाश्यत्वाच्च भूतादि-
रहङ्कारेषु तामसः ॥ ६ ॥

एषु चाहङ्कारस्कन्धेषु मध्याद्योऽयं भूतादिरहङ्कारस्कन्धः, स यस्मात्प्रकाश्यः तत्कार्यस्य तन्मात्रात्मनो मनोबुद्धिभ्यां बुद्धीन्द्रियैश्च योगिभिरुपलभ्यत्वात्, ततोऽयं तामसो विज्ञेयः । उक्तं च सांख्यैः

'भूतादेस्तान्मात्रः स तामसः ······।' (२५ का०)
इति ॥ ६ ॥

अथ मनसो व्यापार उच्यते

देवप्रवर्तकं शीघ्र-
चारि संकल्पधर्मि च ।
मनः शब्दादिविषये
ग्राहकाः श्रवणादयः ॥ ७ ॥

देवनात् द्योतनाद्वा देवा इन्द्रियाणि, तेषां प्रवर्तकमुद्योजकम्, आशुसंचरणशीलं, संकल्पगुणं च मनो बोद्धव्यम् । श्रोत्रादयस्तु देवा यथास्वं शब्दादिविषयग्राहकाः ॥ ७ ॥

वचनादानसंह्लाद-
विसर्गविहृतिक्रियाः ।
वागादीनां पदान्यत्वं
पदे सत्यप्यतद्गुणाः ॥ ८ ॥

वचनं भाषणं, आदानं ग्रहणं, संह्लादः आनन्दः, विसर्गो मलवियोगः, विहृतिः सञ्चारः। एताः क्रियाः क्रमेण वागादीनां ज्ञेयाः, काकाक्षिन्यायेन वागादीनामिति योज्यम् ।

ततश्च वागादीनां पदान्यत्वमिति, यत् तस्याश्रयभूतं स्थानं, ततोऽन्यदेवेन्द्रियम् । नहि कर्णशष्कुल्यादेरेव श्रवणादित्वम्, अपितु तत्स्थानस्थाया इन्द्रियशक्तेः । कुत इत्याह 'पदे सत्यप्यतद्गुणाः' तच्छक्तिविरहिणो जना दृश्यन्ते । नचैषां तानि स्थानानि न सन्ति ॥ ८ ॥

मानसत्वे युक्तिमाह

आत्मेन्द्रियार्थनैकट्ये
सर्वदेवाप्रवृत्तिता ।
प्रवृत्तिकारकास्तित्वं
युक्तितोऽप्यवसीयते ॥ ९ ॥

आत्मनो भोक्तुरिन्द्रियैर्भोगसाधनैरर्थैश्च शब्दादिभिर्भोग्यैः संनिकर्षे सत्यपि सर्वेषां देवानामिन्द्रियाणां यस्मान्न प्रवृत्तिः, अपितु कस्यचिदेव, अतो यत्तदिन्द्रियं प्रवृत्तं, तस्य प्रवृत्तौ कारकमस्तीति युक्तितोऽनुमानादवसीयते । यदाहुः

'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ।' (न्या० सू० १।१६)

इति । सर्वदैवेति पाठे इन्द्रियार्थसंनिकर्षे स-

त्यपि कदाचिदेवेन्द्रियाणि अर्थग्रहे प्रवर्तन्ते, न सर्वदा। ततो नूनमेषां प्रवर्तकं किमप्यस्ति। यद्विना न प्रवर्तन्ते इति व्याख्येयम्। अपिः समुच्चये । न परमागमो मनःसत्तावेदकः, यावद्युक्तिरपीत्यर्थः ॥ ९ ॥

एवंच सति

तत्त्वान्तरोक्तवृत्तिभ्यो
वैलक्षण्याद्विलक्षणः ।
संकल्पो बीजमभ्येति
मनस्तत्पारिशेष्यतः ॥ १० ॥

तत्त्वान्तराणां कलारागविद्यादीनामुक्ता या वृत्तयो व्यापाराः, ताभ्यस्तावद्वैलक्षण्यं संकल्पनाख्यस्य कर्मणोऽस्ति । विलक्षणश्चायं संकल्पो बीजमुद्भवहेतुं गमयति ज्ञापयति। पारिशेष्याच्च मनस्तद्विज्ञेयम् ॥

ज्ञानं तदक्षयोगात्तत्
क्रमयोगितया क्रमात् ।
तथाप्याभाति युगप-
न्नाशुसंचरणादृते ॥ ११ ॥

तस्य मनसोऽक्षैर्योगात् ज्ञानमुत्पद्यते। तच्च क्रमयोगितया क्रमिकं, यथा रूपानुभवकाले न स्पर्शानुभवः रसाद्यनुभवो वा। यद्यपि स्वादुसुरभ्यभिजातमर्मरशब्दवदभिरूपं च द्राघिष्ठशष्कुल्यादिकमास्वाद्यमानं युगपत् पञ्चज्ञानोत्पादहेतुः, तथापि उत्पलपत्रशतव्यक्तिभेदवदलक्ष्यसूक्ष्मक्रमाणि क्रमिकाण्येव तानि रसादिज्ञानानि । एतच्च शीघ्रसंचारितां विना युगपन्मनसः पञ्चज्ञानोत्पादनं नाभाति न प्रकाशते ॥

भौतिकेन्द्रियवाद्यभिप्रायेणाहङ्कारिकत्वमिन्द्रियाणामाक्षेप्तुमाह

नियतार्थतयाक्षाणि
नानायोनीनि कस्यचित् ।
गन्धादिव्यञ्जकत्वाच्च
तदाधारात्मकान्यपि ॥ १२ ॥
शब्दैकग्राहकं श्रोत्रं
स्पर्शैकग्राहिणी च त्वक् ।

अन्यान्यपि नियतार्थतया हेतुभूतया कस्यचिद्वादिनः पक्षेऽक्षाणि इन्द्रियाणि भिन्नका-

रणानि । आहङ्कारिकत्वे हि नैषां नियतार्थ स्यात् । गन्धादिव्यञ्जकत्वाच्च हेतोस्तेषां गन्धादीनामाधारा आश्रयाः पृथिव्यादयस्तदाधाराः, तदात्मकानि । दृष्टं हि पार्थिवमेव द्रव्यं गन्धव्यञ्जकं,घ्राणं च गन्धस्य ग्राहकम् । तस्मात्पार्थिं घ्राणं, आप्यं रसनं, तैजसं चक्षुरिति एवमन्यत् ॥

तत्किं युक्तं नवेत्याह

तथास्तु यदि नादत्ते
सगुणं कारणान्तरम् ॥ १३ ॥
त्वगिन्द्रियमयुक्तार्थ-
ग्राहि युक्तपराङ्मुखम् ।
तेजोवारिमहीद्रव्यं
दृगादत्ते सरूपकम् ॥ १४ ॥
ततस्त्रिद्रव्यजा सा स्या-
न्न परेणेष्यते तथा ।

एकैकमिन्द्रियं स्वकारणादन्यत्कारणान्त गुणसहितं यदि नादत्ते न गृह्णाति, तत् तथास्तु अयमर्थः–यदि इन्द्रियं स्वकारणसमानजाती

द्रव्यं तद्गुणं च गृह्णीयात्, तदानीं विषयनियमः प्रकृतिनियमगमक इष्येत। यावता द्रव्यान्तराणि तद्गुणांश्च गृह्णाति, तस्मान्न नियतार्थतया प्रकृतिगमकत्वमक्षाणामुपपन्नम्। अथ किं तदनैयत्यमित्याह 'त्वगिन्द्रियम्' इत्यादि। तथाहि त्वगिन्द्रियं युक्तस्य स्वकारणत्वात् ग्रहीतुमुपपन्नस्य पराङ्मुखं न स्यात् तदा तदेव तत्परत्वेन गृह्णीयात्, नच स्वकारणादन्यत्वेन अयुक्तग्रहणानां पृथिव्यप्तेजसामर्थानां गृहीतृ। तत्कथं विषयनियमसिद्धिः। तथा दृग्दृष्टिः तेजोद्रव्यं पृथिवीद्रव्यं च भिन्नरूपं गृह्णाति। अतश्च सा दृक् त्रिद्रव्यजा भवेत्। नचास्यास्त्रिद्रव्यजत्वं परेणेष्यते तैजसत्वेनाभ्युपगमात्॥

किंच

येनोपलभ्यते योऽर्थः
स तस्यार्थस्य कारणम्॥ १५॥
न प्राप्तमपि कर्मादि
सेयं व्यसनसन्ततिः।

भवत्पक्षे येनेन्द्रियेण यो गन्धाद्याश्रयः पृ-

थिव्यादिरुपलभ्यते, स पृथिव्यादिस्तस्य कारणमित्यभ्युपगमः। तथाच सति भूतेषु तद्गुणेष्वेव चेन्द्रियेभ्यः प्रतीतयः स्युः। कर्मसामान्यसमवायादि तत् द्रव्येभ्यो गुणेभ्यश्च पदार्थान्तरम्। न च तदात्मकान्यक्षाणि। तस्मात्कर्मादेरक्षैर्ग्रहणं न प्राप्तम्। उक्तं च खेटकनन्दनेन

'भौतिकत्वाच्च नियमे कर्मसामान्ययोः स्फुटम्।
देवेभ्यो बुद्धयो न स्युः समवाये च देहिनाम्॥'
(भो० का० ४०)

इति। सेयं प्रकृतिनियमगमके विषयनियमेऽङ्गीक्रियमाणे निष्फला क्लेशपरम्परा प्रसज्यते। तस्माद्विषयाणामिन्द्रियाणां च भवदभिमतग्राह्यग्राहकनियमासंभवात् न क्षित्यादिप्रकृतिनियमसिद्धिरित्याहङ्कारिकाण्येवेन्द्रियाणीति सिद्धम्॥

अभ्युपगम्यापि ब्रूमः

कर्णरन्ध्रविशिष्टं खं
शब्दवर्गावभासकम्॥ १६॥
नासारन्ध्रविशिष्टं त-
द्भूत केन निवार्यते।

तदृष्टावरुद्धं वा
तदप्यन्यत्र किं कृतम् ॥ १७ ॥
प्राप्तं गृह्णाति नातोद्ये
शप्तं केनापि दस्युना ।

नियतविषयत्वेऽप्यक्षाणामिदं तावद्भवान् पृष्टो व्याचष्टां–यदि कर्णरन्ध्रविशिष्टो नभोभागः शब्दवर्गस्येत्यनेकविधस्य शब्दस्य द्योतकः, तत् नासारन्ध्रादिच्छिद्रान्तरं तथाविधत्वादुच्यताम्। केन तद्ग्रहणं निवार्यते। अथात्रादृष्टं पुरुषार्थप्रदं कर्माख्यमस्ति, येन श्रोत्रनभोभाग एव शब्दवर्गावभासको, न नासारन्ध्रादिरिति नियमः, तर्हि तदपीति तथापि अन्यत्रेत्यस्मत्पक्षेऽपि तथात्वाभ्युपगमस्य का क्षतिः। तत्र हि किं कृतं को बाधको जातः, आहंकारिकत्वे सत्यप्यदृष्टावरुद्धत्वस्य को दोष इत्यर्थः। अन्यथाहि आतोद्ये तन्त्रीवंशमुरजादिवाद्ये प्राप्तमपि आस्यनासारन्ध्रसंनिकर्षस्थमपि शब्दं तदास्यरन्ध्रं घ्राणच्छिद्रं वा किं केनापि दस्युना दुराचारेण शप्तत्वात् शब्दं न गृह्णा-

तीति काका व्याख्येयम्। एतच्च प्रोक्तवद्युक्त्यु-
पपन्नम्॥

यत्रापि च युक्तिर्गमिका न संभवति, तत्र

युक्त्यगम्येऽपि सद्वाक्या-
त्प्रतीतिरनुपद्रवा॥ १८॥
मितार्थादमितार्थस्य
ज्यायस्त्वमिति सूरयः।

असंभवद्युक्तिकेऽपि वस्तुनि सदागमोक्तेः
प्रतीतिः अवगमो निर्बाधः। कुत इत्याह मि-
तार्थादिति। यस्माल्लिंगसापेक्षत्वेन परिमिता-
र्थादनुमानान् सर्वदर्शिज्ञानस्यागमरूपस्यापरि-
मितार्थत्वेन ज्यायस्त्वमित्यागमविदः॥

'मात्रेभ्यो भूतपञ्चकम्' इति यदुपक्रान्तं,
तद्विशेषयितुमाह

व्योमप्रभञ्जनाग्न्यम्बु-
भूमयो भूतपञ्चकम्॥ १९॥
शब्दाद्येकोत्तरगुण-
मवकाशादिवृत्तिमत्।

धूननज्वलनप्लाव-
खरत्वावेदिनो गुणाः ॥ २० ॥
शब्दा वाय्वादिषु व्योम्नि
सवर्णप्रतिशब्दगाः ।

आकाशो वायुर्वह्निर्जलं पृथिवीति भूतपञ्चकम् । एतच्च शब्दाद्येकोत्तरगुणम्, शब्दादयः एकोत्तरगुणाः यस्य तदेवम् । तेन शब्दैकगुणमाकाशं, शब्दस्पर्शगुणो वायुः, शब्दस्पर्शरूपगुणोऽग्निः, शब्दस्पर्शरूपरसगुणं जलम्, शब्दादिपञ्चगुणा पृथिवीति । वक्ष्यमाणावकाशादिवृत्तियुक्तं चैतज्ज्ञेयम् । ये ते वाय्वादिषु गुणाः शब्दास्ते धूननज्वलनाद्यावेदिनः, यतः शकशकादिशब्दो वायौ कम्पनावेदकः, धकमधकमादिशब्दोऽग्नौ ज्वलनं सूचयति । एवं च छलछलादिशब्दोऽम्भसि वहनं, खडखडादिशब्दात्मकश्च पृथिव्यां खरत्वं कथयति । एते च शब्दाः एतेषां परस्पराहतिवशादुत्पन्नाः । व्योम्नि आकाशे सवर्णं समानाक्षरं प्रतिशब्दं गायन्तीति सवर्णप्रतिशब्दगाः भवन्तीति शेषः । तदुक्तं भोगकारिकासु

'शब्दस्तद्व्यजनितः पृथग्भूतचतुष्टये ।
प्रतिशब्दकसंघातो नभस्येवोदितो बुधैः ॥' (११ का०)

इति ॥

अवकाशादिवृत्तिमदिति भूतपञ्चकस्य सामान्यं यद्विशेषणमुक्तं, तद्विभज्य वक्तुमाह

व्यूहोऽवकाशदानं च
पक्तिसंग्रहधारणाः ॥ २१ ॥
वायुव्योमहुताशाम्बु-
धरणीनां च वृत्तयः ।

व्यूहो विरचनं वायोर्वृत्तिः । अवकाशस्यास्पदस्य दानं व्योम्नो व्यापारः । पक्तिः पाकस्तेजसः । संग्रहोऽवष्टम्भोऽम्भसाम् । धारणं धृतिः धरण्याः ॥

अत्र मुनिर्वैशेषिकच्छायया प्रश्नयति

शब्दः खगुण एवेति
तदन्यत्रोपलब्धितः ॥ २२ ॥
ब्रुवते भगवन् केचित्
सर्वभूतगुणः कथम् ।

भो भगवन् यतो भीर्यादेरुत्पद्यते तदन्यत्रो-

पलम्भात् खगुण इति आकाशगुण एव शब्दः उपपद्यते आश्रयादन्यत्रोपलब्धेर्न स्पर्शवद्विशेषगुण इत्यर्थः । अतश्च कथमयं सर्वभूतगुण उच्यते ॥

अत्रोच्यते

क्वान्यत्र श्रवणाकाशे
कथमन्यत्र तद्गुणः ॥ २३ ॥
परेष्टादाश्रयात्तत्र
निर्णेतानुभवो नृणाम् ।

आश्रयादन्यत्रोपलब्धित इति यदुक्तं, तत् क्वान्यत्र । यदि श्रवणाकाश इति अभिमतं, तत् तद्गुणश्च अन्यत्र वेति कथम् । अयमाशयः— तदिति आकाशपरामर्शः, तद्गुणः सन् श्रोत्राकाशे उपलभ्यमानः कथमन्यत्रेत्युच्यते । अथ परेष्टादाश्रयादित्यभिमतं, न तद्युक्तम् । अत्र ह्यनुभवः पुंसां संबन्धी निश्चायकः, शब्दाश्रये एव शब्द उपलभ्यते । तथाहि इह मुरजे शब्दः, इह वीणायां शब्द इति प्रतीतिः ॥

कदाचित्कर्णमूलेऽपि
संविदित्यथ मन्यसे ॥ २४ ॥
श्रोत्रवृत्तिवदस्यापि
परिणामोऽस्तु का क्षतिः ।

अथ मन्यसे कदाचित्कर्णमूलेऽपि संवित् भवतीति। किंचातः। किमेतावता, आकाशैकगुणत्वं शब्दस्य सिद्ध्यति। श्रोत्रवृत्तिवद्वीचीतरङ्गवृत्त्या अस्यापि इति शब्दस्य परिणामात् श्रोत्रनिकटेऽपि कदाचिदुपलम्भोस्तु। नचैतावता काचित् क्षतिः। नच प्रत्यक्षागमव्याहता हेतवोऽर्थं गमयन्ति हेत्वाभासत्वात् यथा सेव्यं नरशिरःकपालं शुचित्वात्, जाड्यजनकोऽग्निरनुष्णत्वादित्यादौ ॥

तदाह

आगमाध्यक्षविहता
हेतवो नार्थसाधकाः ॥ २५ ॥
कालात्ययापदिष्टत्वादिति न्यायविदो विदुः ।

आगमेन 'इति पञ्चसु शब्दोऽयम्' इत्यादिना प्रत्यक्षेण स्पर्शवद्विशेषगुणत्वानुभवात्मकेन येषां बाधः संभवति, ते हेतवः कालात्ययापदिष्टत्वान्नार्थसाधकाः भवन्तीति न्यायविदो मन्यन्ते ॥

यदि चाश्रयादन्यत्रोपलब्धेराकाशगुणत्वं शब्दस्योच्यते, तदानीं

इत्यपि स्थितमेव

इदमपि प्रसज्यते इत्यर्थः ॥

किं तदित्याह

अयं
गन्धोऽप्यस्तु नभोगुणः ॥ २६ ॥
येन केतकपुष्पादे-
र्वैकृष्ट्येऽप्युपलभ्यते ।

आश्रयादन्यत्रोपलब्धेरयं गन्धोऽप्याकाशगुण इत्यवश्यं स्थितं, यतः केतकीचम्पककुसुमादेर्विप्रकृष्टत्वेऽप्यनुभूयते गन्धः । अस्य च प्रत्यक्षेणागमेन वा यथा बाधः, तथा प्रागुक्तस्याश्रयादन्यत्रोपलब्धेरित्यस्य हेतोर्हेत्वाभासत्वमिति तात्पर्यम् ॥

उपसंहरन् भूतचतुष्टयगुणविशेषानाह

इति पञ्चसु शब्दोऽयं
स्पर्शो भूतचतुष्टये ॥ २७ ॥
अशीतोष्णो महीवाय्वोः
शीतोष्णौ वारितेजसोः ।
भास्वदग्नौ जले शुक्लं
क्षितौ शुक्लाद्यनेकधा ॥ २८ ॥
रूपं त्रिषु रसोऽम्भःसु
मधुरः षड्विधः क्षितौ ।
गन्धः क्षितावसुरभिः
सुरभिश्च मतो बुधैः ॥ २९ ॥

इति अनयोक्तया युक्त्या, पञ्चसु भूतेष्वयं शब्दः, एष्वेवाकाशवर्जितेषु स्पर्शः, तत्र मह्यां वायौ चाशीतोष्णः, अम्भसि शीत एव, तेजसि उष्ण एव । रूपं त्रिष्विति पृथिव्यप्तेजःस्वेव, तत्राग्नौ भास्वरं प्रदीप्तं, जले शुक्लं, क्षितौ शुक्लाद्यनेकविधम् । रसः क्षित्यम्भसोः, तत्राप्यम्भसि मधुरः, क्षितौ कट्वम्ललवणतिक्त-

मधुरकषायाः । गन्धः पृथिव्यां सुरभ्यसुरभिरूपो विद्वद्भिरिष्टः ॥ २९ ॥

अथ यथैषां भूतानां शरीरसंनिविष्टत्वं, तथोच्यते

देहेऽस्थिमांसकेशत्वङ्-
नखदन्तेषु चावनिः ।
मूत्ररक्तकफस्वेद-
शुक्रादौ वारि संस्थितम् ॥३०॥
हृदि पक्तौ दृशोः पित्ते
तेजस्तद्धर्मदर्शनात् ।
प्राणादिवृत्तिभेदेन
नभस्वानुक्त एव ते ॥ ३१ ॥
गर्ववृत्त्यनुषङ्गेण
खं समस्तासु नाडिषु ।

अस्थिमांसादौ पृथिवी भौतिके शरीरेऽवस्थिता । मूत्ररक्तादौ जलम् । हृत्प्रदेशे, पक्तौ पाकक्रियायामन्नपानेन्धनमौदर्यं तेजस्तस्मिन्, दृशोः पित्ते च तत् स्थितम् । तद्धर्मदर्शना-

दित्येकैकस्मिन् योज्यम् । तत्र हृदि तद्धर्मस्यौष्ण्यस्य, पक्तौ तद्धर्मस्य पाकस्य, दृशोः प्रकाशस्य, पित्ते च संतापौज्ज्वल्यादेरुपलम्भात् तेजः संनिविष्टम् । प्राणापानादिवृत्तिभेदेन वायुर्यथा अवस्थानावस्थितः, तथाच तवोक्तमेवेति वक्ता श्रोतारं भरद्वाजं मुनिं स्मारयति । यदुक्तं प्राक्

'वृत्तिः प्रणयनं नाम यत्तज्जीवनमुच्यते ।' (११।२२)

इति । सर्वासु च नाडीषु आकाशं गर्ववृत्त्यनुषङ्गेणेति अहंकारव्यापारानुषङ्गात् स्थितम् ॥

इदानीं ततः कलादिक्षित्यन्ततत्त्वव्रातं सूक्ष्मदेहारम्भकत्वेन वक्तुमाह

प्रयोक्त्र्यादिमहीप्रान्त-
मेतदण्वर्थसाधनम् ॥ ३२ ॥
प्रत्यात्मनियतं भोग-
भेदतो व्यवसीयते ।

प्रयोजयति क्रियाशक्त्युत्तेजनेन पुमांसमिति प्रयोक्त्री कला, तदादि क्षित्यन्तं च एतत् तत्त्ववृन्दं पुमर्थसाधनमेकैकस्यात्मनो नियतमसाधारणं भोगभेदात्प्रतीयते साधारणत्वे भो-

गभेदानुपपत्तेः । ननु भोगभेदे कर्मणो निमित्तत्वमित्युक्तम्। सत्यं, किंतु न साक्षात्, अपितु पारम्पर्येण । तथाहि कर्मकृतस्तत्त्वशरीरभेदः, तद्भेदकृतं च भोगवैचित्र्यमित्यदोषः । स तु भोगभेदः करिनरतुरगादिभेदभिन्नः सूक्ष्मशरीरवैचित्र्यं विना न भवति,—इति अत्रापि कर्मण एव हेतुतेति न कश्चिद्दोषः ॥

एतच्च सूक्ष्मशरीरं

सर्वतो युगपद्वृत्ते-
रनुत्पादादसर्वगम् ॥ ३२ ॥
भिन्नजातीयमप्येक-
फलं दीपाङ्गवस्तुवत् ।

यद्येतत् सर्वगं विभु स्यात्, तत् सर्वत्र यौगपद्येन वृत्त्युत्पादो भवेत् । नचैवं, यावता क्वचिदेकदेश एव एतद्वृत्तेः कर्मफलोपभोगलक्षणायाः समुत्पादः। भिन्नजातीयमनेककलादिप्रत्युद्भूतमपिच एतत् दीपाङ्गवस्तुवत् एकफलम्। यथा भिन्नकारणजन्यतैलपात्रवह्निवर्त्यादिवस्तु तमोनिवृत्तिलक्षणैकार्थसाधकम्, एवं तन्मा-

त्रमहदहंकारकलाद्युद्भवमप्येतत् कर्मोपभोगफलं ज्ञेयम् ॥

अथ व्याख्यातार्थोपसंहाराय प्रकरणान्तरोपक्रमाय च श्लोकः

इत्यातिवाहिकमिदं वपुरस्य जन्तो-<br>
श्चित्सङ्गचिद्गहनगर्भविवर्ति लेशात् ।<br>
नैतावतालमिति भौवनतत्त्वपङ्क्ति-<br>
माधारदेहविषयाभ्युदयाय वक्ष्ये ३४

इत्थमिदमस्य संसारिणो जन्तोरतिवाहयति अवश्यं भोग्यं कर्मेति आतिवाहिकं वपुर्लेशात् संक्षेपात् उक्तमिति शेषः । कीदृशम् । चित्सङ्गात् चित्संश्लेषवशात् चित्, अचिदपि चैतन्यावियुक्तत्वात् चिद्रूपमित्यर्थः । गहनं माया, तद्गर्भे विवर्तते तच्छीलमिति गहनगर्भविवर्ति । एतावता च न पर्याप्तमिति कृत्वा भोग्याश्रयभूतां भौवनतत्त्वपङ्क्तिं वक्ष्ये । किमर्थमित्याह अधारदेहविषयाभ्युदयाय, सूक्ष्मशरीरस्याधारो यो भौतिको देहस्तस्य यो वैषयिकोऽभ्युदयः स्रक्चन्दनाद्युपभोगस्वरूपः तदर्थम्, यद्वा आधारः

आश्रयः, देहः स्थूलः, तत्तद्भुवनजा विषयाः इन्द्रियार्थाः, तेषामभ्युदयायोत्पत्तये भौवन-तत्त्वपङ्क्तिं वक्ष्ये, यतस्तत्त्वभुवनसंततावाश्रयभूतायां देहवैचित्र्यं भोगवैचित्र्यं च दीक्षाया-मवश्यं ज्ञेयं यत् तदग्रे वक्तुमिष्टम् ॥ ३४ ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तावहङ्कारादिकार्यविचारप्रकरणं
द्वादशम् ॥ १२ ॥



अथ

# श्रीमृगेन्द्रतन्त्रे ।

## विद्यापादे ।

### ( त्रयोदशः पटलः )

'अथोक्तार्थप्रसिद्ध्यर्थम्' इत्यादिना भुवनादिवर्णनं प्राक्तनप्रकरणान्तसूचितं ससंबन्धप्रयोजनं प्रस्तौति

अथोक्तार्थप्रसिद्ध्यर्थं
भुवनादि विनिर्ममे ।
साधारणेभ्यो योनिभ्यः
कलादिभ्यो महेश्वरः ॥ १ ॥

अथेति अशुद्धात्मनां निरतिशयश्रेयःप्रतिबन्धककर्मपाशप्रशमाय तत्तद्भोगसाधनतनुकरणभुवनसिसृक्षानन्तरं महेश्वरोऽनन्तेशनाथः उक्तस्य संसार्यणोर्भोगलक्षणस्यार्थस्य प्रकर्षेण साकल्येन सिद्ध्यर्थं निष्पादनाय साधारणाभ्यः कलादिभ्यः प्रकृतिभ्यो भुवनादि रचयाञ्चक्रे ।

रचना चैषा न प्रागभाववतामुत्पत्तिः, अपितु सत्कार्यवादप्रकरणोक्तवत् शक्त्यात्मना स्थितानां व्यक्तरूपतया स्वकारणादभिव्यक्तिः ॥१॥

तानि कालानलादीनि
कलाप्रान्तानि मण्डलम् ।
संसारमिति तत्त्वज्ञा
भोगस्थानं प्रचक्षते ॥ २ ॥

तानि च कालाग्निभुवनादीनि कलाभुवनान्तानि । एतच्च भोगस्थानं संसारमण्डलं परमार्थविदः कथयन्ति । प्राक्प्रोक्तं सकलं भोग्यं भुवनजातं कलादिभ्यो योनिभ्यो जायते, नतु मायातस्तस्याः श्रीमत्स्वायंभुवादावकार्यत्वश्रुतेः, संनिवेशवतीत्वे भोग्यत्वाभ्युपगमे च भोग्यस्य संनिवेशवतो घटादेरिवानित्यत्वप्रसंगभयादसंनिवेशवतीत्वं, अभोग्यत्वं चावश्यमङ्गीकार्यम् ॥ २ ॥

ननु पुंसो माया यद्यभोग्या, तर्हि तत्कार्यव्यतिरेकेणान्यस्य भोग्यस्यासंभवान्न किंचिद्भोग्यमित्यभोक्तैव पुरुषः प्रसक्तः । सत्यम्,

किंतु कार्यं तदीयं व्यक्तरूपतया अवस्थितं सदस्य भोग्यम्, नत्वसौ शक्तिमात्ररूपत्वात्तस्या इति उक्तम् ॥ २ ॥

यद्येवं तद्गर्भे तत्तद्भुवनविशेषश्रुतेर्भुवनानां च संनिवेशविशिष्टतां विना भुवनत्वायोगान्मायातत्त्वस्यापि संनिवेशवत्त्वं प्रसक्तमित्याह

मायायामपि पठ्यन्ते
गहनेशादयोऽधिपाः ।
तत्त्वशुद्धिश्च दीक्षायां
सर्वं तत्कृतिमस्तके ॥ ३ ॥
नित्यत्वव्यापकत्वादि-
श्रवणादवसीयते ।
दृष्टं पुरादि यद्भोग्यं
मूर्तं प्रलयधर्मि च ॥ ४ ॥

यद्यपि मायातत्त्वे मण्डलेश्वर–गहनेश्वरादयो रुद्राः भुवनाधिवासिनः पठ्यन्ते, यद्वक्ष्यति

'ध्रुवतेजोऽधिपौ रुद्रौ गहनेशश्च सर्वराट् ।
मायाधिकारिणो रुद्रा मण्डलाधिपतीश्वराः ॥' (१३।१५४)

इति, दीक्षायामपि तत्त्वशुद्धिर्मायातत्त्वस्थत्वेन यद्यपि क्रियापादेऽभिधास्यते, तथापि न तत् तस्याः संनिवेशविशिष्टतामापादयति, किं तु तानि तत्तत्तत्त्वस्थत्वेनोक्तानि भुवनानि, तन्निवासिनश्च मण्डलेश्वरा इत्येतत्सर्वं तत्कृतेः तत्कार्यभूतायाः कलाया मस्तके ज्ञेयम्, शक्तिरूपाया मायायाः प्रथमा व्यक्तिः कला, तन्मूर्धन्येतत्सर्वं स्थितमित्यर्थः। कुत एतज्ज्ञायत इत्याह 'नित्यत्वव्यापकत्वादि' इत्यादि, यतो नित्यत्वं व्यापकत्वं चास्याः प्रागुपपादितमागमेषु श्रूयते। यदि च भुवनगर्भत्वमस्याः, तदा संनिवेशवती स्यात्। तथाच सति अव्यापिका विनश्वरी च भवेत् । अत्रापि हेतुमाह 'दृष्टं पुरादि' इत्यादि, यत् यस्मात्कारणात् दृष्टं दृश्यमानं च पुरप्राकारादि यत्, तत् भोग्यत्वे सति मूर्तं प्रलयधर्मि च दृष्टम्। अस्याश्च संनिवेशवन्ति भुवनानि गर्भे स्थितानि। भोग्यत्वं च यदि साक्षादङ्गीक्रियते, तदा मूर्तत्वं विनश्वरत्वं च प्रसज्यते इति तत्कार्यस्यैव कलादेर्व्यक्तरूपस्य भुवनयोगित्वमिति न कश्चिद्दोषः ॥ ४ ॥

एष एव च न्यायो महामायाख्यायां शुद्ध-विद्यायामपि अनुसर्तव्य इत्याह

शुद्धाध्वन्यपि मायायाः
परस्याः पतयः कृतौ ।
ये तस्यामपि पठ्यन्ते
तेऽपि तत्कृतिमस्तके ॥ ५ ॥

शुद्धेऽध्वनि परस्याः शुद्धविद्याख्याया मायाव्यपदेशः । तथाचोक्तं श्रीमद्रौरवे

'मायोपरि महामाया··············।'

इति । तत्र कृतौ करणीये स्वे स्वेऽधिकारे येऽधिकृताः, तेऽपि तत्कार्यमूर्धनि श्रीमन्मतङ्गाद्युक्तक्रमेण स्थिता अवगन्तव्याः ॥ ५ ॥

इदानीमधस्तादूर्ध्वैकदेशवर्तिनो ब्रह्माण्डस्य विस्तारोच्छ्रायौ तद्गतभुवनप्रमाणं च वक्तुं, योजनप्रमाणं परमाण्वादिक्रमेण वर्णयति

रजो विलोक्यते तिर्य-
ग्जालाविष्टार्करोचिषाम् ।
तदष्टाष्टगुणस्थाने
तृतीये स्यात्कचाग्रकम् ॥ ६ ॥

लिक्षा यूका यवोऽप्येव-
मङ्गुलं तत्रिसंगुणैः ।
तैरेव गुणितं पाणि-
र्धनुस्तद्वेदलक्षितम् ॥ ७ ॥
दण्डो द्वे धनुषी ज्ञेयः
क्रोशस्तद्द्विसहस्रकम् ।
द्विक्रोशमाहुर्गव्यूतिं
द्विगव्यूतिं च योजनम् ॥ ८ ॥
कपालमर्बुदं स्थौल्या-
द्ब्रह्मणोऽण्डस्य योजनैः ।

आदित्यभासां तिर्यग्जालान्तरप्रविष्टानां सतां सूक्ष्मतमं यद्रजो दृश्यते, तदष्टगुणीकृत्य तत्प्रमाणं, पुनरष्टगुणितं कार्यं यावत्तृतीये स्थाने कचाग्रकं नाम प्रमाणं भवति । उक्तं च श्रीमत्स्वतन्त्रे

'अष्टानां परमाणूनां समवायो यदा भवेत् ।
त्रसरेणुस्तदाख्यातस्तत्पद्मरज उच्यते ॥
त्रसरेण्वष्टकं देवि वालाग्रं तद्विधीयते ।' (१०।१७)

इति । तैरष्टभिः कचाग्रैर्लिक्षा । तदष्टकेन यूका ।

ताभिरष्टाभिर्यवो ज्ञेयः। एवमिति यवाष्टकेनाङ्गुलम्। तत्रिसंगुणितैस्तैरेव गुणितं पाणिः, तदङ्गुलं तैरेवेत्यष्टभिस्त्रिगुणितैश्चतुर्विंशत्यङ्गुलैर्गुणितं सत् पाणिः हस्तो भवति। वेदशब्दस्य चतुःसंख्यालक्षकत्वात् तेषां पाणीनां चतुष्केण लक्षितं धनुःसंज्ञं प्रमाणं बोद्धव्यम्। धनुर्द्वयेन दण्डः, दण्डसहस्रद्वयेन क्रोशः, क्रोशद्वयेन गव्यूतिः, तद्द्वयं च योजनम्। एषां योजनानामर्बुदं कोटिविस्तृतं ब्रह्माण्डकपालं ज्ञेयम् ॥

तस्यान्तः काञ्चनं धाम
कालाग्नेस्तावदेव हि ॥ ९ ॥
यत्रान्तकालतीक्ष्णांशु-
कोटितेजास्तथाविधैः ।
रुद्रैरास्ते वृतो देवः
कालाग्निरिति विश्रुतः ॥१०॥
सर्वाध्ववर्तिभूतानां
यस्मिन्नुद्धृत्ततेजसि ।

भयमुत्पद्यते शक्त्या
संहर्त्र्या चोदिते प्रभोः ॥११॥

तस्येति ब्रह्माण्डस्य अन्तः कालाग्नेः सौवर्णं गृहं कोटिः । यत्र गृहे कल्पान्तार्ककोटिसमदीप्तिस्तथाविधानेकरुद्रावृतः कालाग्निस्तिष्ठति। यस्मिन् पारमेश्वर्या संहर्त्र्याख्यया शक्त्या क्षयाय प्रेरिते उद्दीपिते तेजसि समस्ताध्ववर्तिनां भूतानां त्रासः संजायते ॥ ११ ॥

तस्य स्वभावतो ज्वालाः
प्रवृत्ता दशकोटयः ।
योजनानां तदर्धेन
धूमः सान्द्रः सुदारुणः ॥ १२ ॥

प्रकृत्या तज्ज्वाला दशकोटिप्रमाणाः । धूमः पञ्च कोट्यः सान्द्रो घनो दारुणो दुःसहः ॥१२॥

ततः पुटास्त्रयस्त्रिंश-
द्दशलक्षोनकोटिकाः ।
तदन्तराणि द्वात्रिंश-
ल्लक्षकाणि दुरात्मनाम् ॥ १३ ॥

स्थानानि यातनाहेतो-
निर्मितान्यध्ववेधसा ।

ततोऽनन्तरं नाकविस्ताररूपाः त्रयस्त्रिंशत्पुटाः प्रत्येकं नवतिलक्षाणि । तदन्तराणि द्वात्रिंशत्, तेभ्य एकैकं लक्षप्रमाणम् । एतानि पापीयसां यातनार्थं कृतान्यध्ववेधसा भुवनाध्वस्रष्ट्रा अनन्तेशेन ॥

तानि ते नामभिर्वक्ष्ये
द्विजमुख्य निबोध मे ॥ १४ ॥

रौरवध्वान्तशीतोष्ण-
संतापाब्जमहाम्बुजाः ।
कालसूत्राष्टमा ह्येते
नरका इति विश्रुताः ॥ १५ ॥

अथ महानरकाणामष्टानां संज्ञाः

सूच्यास्यकालखड्गाख्य-
क्षुरधाराम्बरीषकाः ।
तप्ताङ्गारा महादाहाः
संतापाश्चेति ये मुने ॥ १६ ॥

भवन्त्यष्टौ सुबीभत्सा
महाशब्दपदानुगाः ।

सुबीभत्साः अतिभयानकाः । महाशब्दस्य पदं नरकमित्याख्यारूपमनुगतं येषां, महानरकसंज्ञा इत्यर्थः ॥

अथ नरकराजाष्टकं

लाक्षाप्रलेपमांसाद-
निरुच्छ्वासनसोच्छ्वसाः ॥ १७॥
युग्माद्रिशाल्मलीलोह-
प्रदीप्तक्षुत्पिपासकाः ।
कृमीणां निचयश्चेति
राजानः परिकीर्तिताः ॥१८॥

अथ लोहस्तम्भेत्यादिना राजराजेश्वराष्टकसंज्ञा उच्यन्ते

लोहस्तम्भोऽथ विण्मूत्र-
स्तथा वैतरणी नदी ।
तामिस्रश्चान्धतामिस्रः
कुम्भीपाकः सरौरवः ॥ १९ ॥

महापद्मानुगोऽवीची
राजराजेश्वरेश्वराः।

अथैषां पुटानां सान्तरालानां संख्यां कलयितुमाह

एषां पुटानां नरकैः
सार्धं योजनसंख्यया ॥ २० ॥
भवन्ति कोटयस्त्रिंशद्
द्वे च लक्षे द्विजोत्तम।

त्रिंशद्योजनकोटयो लक्षद्वयं चेति त्रयस्त्रिंशत्पुटानां सान्तरालानां प्रमाणम् ॥

ततस्त्रिंशत्सहस्राणि
त्यक्त्वा भूर्नवलाक्षिकी ॥ २१ ॥
भवत्ययोमय्यर्धेन
पूर्वेणार्धेन काञ्चनी।

ततोऽनन्तरं त्रिंशत्सहस्राणि योजनानां त्यक्त्वा नवलक्षप्रमाणा भूः पूर्वेणार्धेन हेममयी, अपरेण तु अयोमयी ॥

योऽप्यधस्तात्पुटस्तस्या
मृदर्धं चार्धमायसम् ॥ २२ ॥
तत्र द्वात्रिंशतोऽमीषां
निरयाणां पतिः स्थितः ।
कूष्माण्ड इति विख्यातः
प्रलयार्कानलद्युतिः ॥ २३ ॥
करालवदनः क्रुद्धो
वृत्तकोटरलोचनः ।
टङ्कपाणिस्तथाभूतै-
र्भूतैर्भूयोभिरावृतः ॥ २४ ॥

अनन्तरोक्ताया नवलाक्षिक्याः भुवो हैमात्पुटादधःस्थो योऽयोमयः पुटः,तस्याप्यर्धं पार्थिवम्, अर्धं तु आयसम् । तत्र चामीषां प्रागुक्तानां नरकाणां द्वात्रिंशत ईशः कूष्माण्डाख्यः करालवदनत्वादिविशेषणविशिष्टस्तथाविधैर्भूतैः परिवृत आस्ते । वृत्तकोटराणि परिवर्तुलगर्भाणि सतारकत्वात् लोचनानि यस्य स एवम् । टङ्कः प्रागुक्तः परशुः ॥ २४ ॥

अयोरुक्मपुटादूर्ध्व-
मष्टमीयं वसुन्धरा ।
साहस्राः षट् परा मध्या
व्यर्कलक्षत्रिकोटिकी ॥ २५ ॥

वसत्यो नवसाहस्राः
परा दशसहस्रिकी ।
तदासां सप्तकं सद्भिः
ख्यातं पातालसप्तकम् ॥२६॥

काञ्चनमायसं च यत् पुटद्वयमुक्तं, ततोऽनन्तरमियं वसुन्धरा भूमिरष्टमी, यस्यां वयमास्थिताः । एतद्व्यतिरिक्ताश्च अन्याः षड्भूमयः सहस्रप्रमाणाः । अस्यास्तासां च षण्णां या मध्ये भवा मध्या सप्तमी भूमिः, सा विगतद्वादशकललक्षकोटित्रयप्रमाणा, द्वे कोट्यौ अष्टाशीतिश्च लक्षाणीत्यर्थः । एतस्य भूम्यष्टकस्यान्तराले वसतयः आस्पदानि एकैकं नवसहस्रप्रमाणकानि । परेति ऊर्ध्ववर्तिनी या वसतिर्वक्ष्यमाणसहस्रयोजनप्रमाणकाञ्चनास्प-

दहाटकेशाधिष्ठानभूता, सा दशसहस्रा । आसां च वसतीनां सप्तकं, तत् सप्तपातालमिति विद्वद्भिरुक्तम् ॥ २६ ॥

तन्नामतोऽधिपतित
उच्यमानं निबोध मे ।
आभासं परतालाख्यं
त्रितलं च गभस्तिमत् ॥ २७ ॥
महातलं रसाङ्कं च
पातालं सप्तमं मुने ।

इत्थं नामत उक्त्वा, अधिपतीन् कथयति

सप्तस्वेतेषु दैत्येन्द्र-
भुजङ्गक्षणदाचराः ॥ २८ ॥
सप्त सप्त समाख्याता-
स्तानप्यथ निबोध मे ।

एकैकस्मिन् दैत्येन्द्रो नागो राक्षसश्च एतेषु सप्त सप्त कथिताः । तांश्चोच्यमानान् बुध्यस्व ॥

दैत्याः शङ्कश्रुतिः पूर्वे
प्रल्हादः शिशुपालकः ॥ २९ ॥
कर्कन्धको हिरण्याक्षो
बृहद्गर्भो बलिस्तथा ।

इति सप्तसु दैत्यसप्तकम् ॥

नागानाह

काद्रवेयाः कुटिलको
वासुकिः कम्बलस्तथा ॥ ३० ॥
कार्कोटकोऽथ कालाङ्गो
दुर्दर्शस्तक्षकस्तथा ।

कद्वा अपत्यानि काद्रवेयाः ॥

अथ नागानन्तरोपक्रान्तं रक्षःसप्तकं

विकटो लोहिताक्षश्च
यमाक्षो विकटाननः ॥ ३१ ॥
करालो भीमनिर्ह्रादः
पिङ्गलश्चेति राक्षसाः ।

अथ हाटकेशभुवनं

तेषामुपरि निःशेष-
पातालाधिपतीश्वरः ॥ ३२ ॥
साहस्रे काञ्चने धाम-
मण्डले हाटकः स्थितः ।
यं स्तुवन्ति प्रियप्राप्त्यै
यता यतिविभूषणैः ॥ ३३ ॥
दैत्ययक्षासुराधीश-
ललना ललितैः पदैः ।

तेषां पातालानामूर्ध्वं तदीश्वरो हाटकेशः स्थितः, यं भगवन्तं दानवगुह्यकदेवनागाङ्गनाः सुन्दरैः स्तुतिपदैः स्तुवन्ति । कीदृशास्ताः इत्याह यताः प्रयताः । किंभूतैः पदैः स्तुवन्ति, यतिविभूषणैः, यतिर्द्रुतमध्यविलम्बितरूपा परिपाटी, सैव भूषणं येषां स्तुतिपदानां तैर्गीत्यनुषक्तैश्चाटुभिराराधयन्तीत्यर्थः । किमर्थम्; प्रियप्राप्त्यै यतस्ताः कामवशीकृताः ॥

ततः कोटिशतं पृथ्वी
नानाजनसमाश्रया ॥३४॥

द्वीपशैलसरिद्वारि-
निधिमण्डलमण्डिता ।

ततोऽनन्तरं विविधजनास्पदा वक्ष्यमाण-द्वीपजलनिधिवृन्दैर्भूषिता भूः ॥

द्वीपानां प्रमाणं संज्ञां चाह

जम्बूशाककुशक्रौञ्च-
शाल्मगोमेधपुष्कराः ॥ ३५ ॥

लक्षादिद्विगुणा द्वीपाः
क्षाराद्यब्धिभिरावृताः ।

वक्ष्यमाणवल्लक्षादारभ्योत्तरोत्तरद्विगुणद्वि-गुणमानकः क्षारक्षीरादिः । तत्प्रमाणैः समुद्रैः परिवृता जम्ब्वादिद्वीपाः सप्त ॥

ततो हिरण्मयी भूमि-
र्लोकालोकश्च पर्वतः ॥ ३६ ॥

तमः परस्ताद्गर्भोदः
कटाहश्चेति भूतलम् ।

पश्चात् भूमिः काञ्चनमयी, लोकालोकसं-

ज्ञोऽद्रिः, तद्बहिस्तमः, ततस्तु गर्भोदाख्योऽब्धिरण्डकटाहश्चेत्येतद्भूतलम् ॥

अथैतद्विभागं विस्तरेण ज्ञातुमिच्छन् मुनिः प्रश्नयति

चित्रशैलसरिद्द्वीप-
काननोदध्यलंकृताम् ॥ ३७ ॥
पृथ्वीं भगवतीं शक्र
श्रोतुमिच्छामि विस्तरात् ।
त्वयि वक्तरि देवेश
सर्वप्रत्यक्षदर्शिनि ॥ ३८ ॥
निष्ठाज्ञप्तिरसाकृष्टं
श्रुतौ धावति मे मनः ।

विविधनगसरिद्द्वीपोपवनार्णवमण्डितां भुवं विस्तराच्छ्रोतुमिच्छामि । त्वयि किल सकलप्रत्यक्षदर्शिनि उपदेष्टरि मम निरवशेषज्ञानौत्सुक्याक्षिप्तं चेतः श्रवणनिमित्तं धावति ॥

वर्तयिष्य इत्यैन्द्रं वचः

वर्तयिष्ये द्विजश्रेष्ठ
प्रस्तुतोक्तिशरीरवत् ॥ ३९ ॥

द्वीपान्नदीवनान्तांश्च
शृणुष्वैकाग्रमानसः ।

इतः परमध्वग्रन्थः सुगमत्वात्क्वचित् प्रदेशवृत्त्या व्याख्यायते, वर्तयिष्येऽभिधास्ये प्रस्तुतोक्तिशरीरक्रमेण ॥

जम्बूद्वीपं क्षितेर्नाभि-
स्तद्वृत्तं लक्षयोजनम् ॥ ४० ॥
क्षाराब्धिना परिवृतं
परिवृत्तेन तावता

तावतेति तथाप्रमाणेन ॥

तस्य मध्ये स्थितः शैल-
राजराजो हिरण्मयः ॥ ४१ ॥
तिरस्कृतांशुमज्ज्योति-
र्मेरुः सुरनिषेवितः ।

तन्मध्ये पर्वताधिराजो देवसेवितः काञ्चनमयः प्रतिहतार्ककान्तिर्मेरुः स्थितः ॥

स षोडश सहस्राणि
क्षितौ विष्टो महीतलात् ॥४२॥

तदूनमुन्नतो लक्षं
मूले षोडश विस्तृतः ।

स मेरुर्भूमेरन्तः षोडश योजनसहस्राणि प्रविष्टः, महीतलादारभ्य ऊर्ध्वं यावत् चतुरशीतिसहस्रोन्नतिः, मूले च षोडशसहस्रविस्तारः । ऊर्ध्वतोऽस्य शरावाकृतिविस्ताराधिक्येन द्वैगुण्यं । उक्तं च श्रीमत्स्वतन्त्रे

'षोडशैव सहस्राणि ऊर्ध्वभागे प्ररोपितः ।
तान्यस्य मूले विस्तारस्तदूर्ध्वं द्विगुणस्तु सः ॥
स शरावाकृतिर्देवि मेरुर्देवाश्रयोऽद्रिराट् ।' (१०।१२३)

इति ॥

त्रिषु पादान्तरेष्वस्य
चतुर्वृद्धेषु पर्वसु ॥ ४३ ॥
नेमयः कटकाकारा
निर्गता दीप्तिमत्तराः ।
एका दशसहस्रा तु
मनुसाहस्रिकी परा ॥ ४४ ॥
नेमिर्या मस्तकोपान्ते
लोकपालसमाश्रया ।

चक्रवाटेति तामाहुः
सर्वरत्नप्रभावतीम् ॥ ४५ ॥

अस्य मेरोः, स्वोच्छ्रायपादेन पञ्चविंशतिसहस्रात्मकेनान्तरं येषां, तेषु तथाविधेषूत्तरं चतुःसहस्रविवृद्धेषु पर्वसु भागसन्धिषु कटकाकाराः सुष्ठु दीप्तास्तिस्रो नेमयो मेखला निर्गताः। तदेवैषु त्रिषु स्थानेषु चतुर्वृद्धत्वं दर्शयति एकादशसहस्रेत्यादिना । एका आद्या दशसहस्रप्रमाणा, द्वितीया मनुसाहस्रिका चतुर्दशसहस्रा, चतुर्वृद्धोक्तेश्च तृतीया अष्टादशसहस्रविस्तृता । नेमिर्या मस्तकसमीपे लोकपालाश्रयभूता च, तामनेकरत्नप्रभाभास्वरां चक्रवाटोक्त्या आगमज्ञा आहुः । एवं च प्रागुक्तचतुरशीतियोजनसहस्रोच्छ्रायस्य मेरोः पर्वत्रयं पञ्चसप्ततिसहस्रमानकं, कटकत्रयं तु नवसहस्रोन्नतम् । एकैकस्य त्रिसहस्रमानकत्वमित्यागमः ॥ ४५ ॥

सिद्धगन्धर्वमहतां
तदधः पर्वसु स्थितिः ।

चक्रवाटाधःस्थितेषूक्तेषु त्रिषु पर्वसु सिद्धादीनामास्पदं, या तु चक्रवाटाख्या ऊर्ध्वमेखला तस्यामष्टसु शृङ्गेषु पुर्योऽष्टौ समवस्थिताः ॥

प्राच्यादिष्विन्द्रमुख्यानां
नामतस्तान्निबोधत ॥ ४६ ॥

स्पष्टः श्लोकः ॥ ४६ ॥

नानारत्नप्रभाजाल-
मण्डलालङ्कृता हरेः ।
सिद्धसाध्यमरुज्जुष्टा
रुक्मभूरमरावती ॥ ४७ ॥

विविधरत्नकान्तिकलापपरिवेषभूषिता सिद्धादिसेविता हेमभूतला प्राच्यामिन्द्रस्यामरावत्याख्या पुरी ॥ ४७ ॥

रक्तपीतमणिप्राय-
हेमप्राकारगोपुरा ।
वह्नेस्तेजोवती वह्नि-
तुल्यभूतनिषेविता ॥ ४८ ॥

मृत्योः संयमनी तुङ्ग-
लोहप्राकारमण्डला ।
कालपाशपितृव्यादि-
प्रेतमारिनिषेविता ॥ ४९ ॥

कालपाशादिजुष्टात्युन्नतायसप्राकारसमूहः संयमनी नाम दक्षिणस्यां दिशि याम्यपुरी । मारिर्नाम युगपदनेकलोकक्षयहेतुरुत्पातो विशिष्टदेवताधिष्ठानः । सा च देवता प्रेतपतिनाज्ञप्ता यत्र क्वचित्कार्यं करोति ॥ ४९ ॥

कृष्णा दैत्यपतेर्मृत्यो-
र्धामवद्दैत्यसेविता ।
नीलरत्नप्रभाजाल-
वितानवरभूषणा ॥ ५० ॥

वैदूर्येन्द्रनीलप्रभापुञ्जवद्भिर्वितानश्रेष्ठैर्भूषिता यमपुरीवदसितवर्णा दैत्यजुष्टा कृष्णाख्या निर्ऋतेः पुरी ॥ ५० ॥

शुद्धवत्यम्बुनाथस्य
स्फटिकोपलनिर्मिता ।

पाण्डुराभ्रोपमैर्यादः-
सेविता भाति धामभिः ॥ ५१ ॥

शुद्धवती नाम वरुणस्य नगरी स्फटिकशिलाविरचिता मकरकूर्मादिसेविता श्वेताभ्रशुभ्रैर्गृहैः शोभते ॥ ५१ ॥

वायोर्गन्धवती तुङ्ग-
श्वेतपीतध्वजाकुला ।
बलवद्भूतसंजुष्टा
सर्वरत्नविनिर्मिता ॥ ५२ ॥

श्वेतैः पीतैश्च ध्वजैर्युक्ता विचित्ररत्नविरचिता समर्थभूतनिषेविता वायोः पुरी गन्धवती नाम ॥ ५२ ॥

महोदया चन्द्रमसः
श्वेता मुक्तादिनिर्मिता ।
द्विजसंघस्तुता भाति
पुरैर्हिमगिरिप्रभैः ॥ ५३ ॥

सोमस्योदीच्यां महोदयाख्या पुरी शुक्ला मुक्तादिनिर्मिता, आदिग्रहणात् चन्द्रकान्त-

दृषदा, सा च ब्राह्मणवृन्दस्तुता प्रालेयाद्रि-
द्युतिभिर्भवनैः शोभते ॥ ५३ ॥

ज्वलल्ललाटदृग्दग्ध-
स्मरमृत्युयशोभृतः ।
पुरी यशोवती सर्व-
रत्नजा रुद्रसेविता ॥ ५४ ॥

ज्वलता तृतीयेनाक्ष्णा दग्धौ कामकालौ येन, अत एव तथाविधसकलजगद्वैरिविनाशा-द्यशोभृत ईशाननाथस्य सर्वरत्नविनिर्मिता रुद्रैः सेविता च यशोवती नाम पुरी ॥ ५४ ॥

इति सर्वर्तुसुखदा-
श्चक्रवाटार्धविस्तृताः ।
पुर्योऽष्टावनिलोद्भूत-
पारिजातरजोऽरुणाः ॥ ५५ ॥

वेधसा निर्मिता लोक-
पालचक्रानुवर्तिनाम् ।
भूतये स्वर्ग इत्येता
गीयन्ते कविभिः क्षितौ ॥ ५६ ॥

सर्वेषां ऋतूनां संबन्धि सुखं ददतीति सर्वर्तुसुखदाः, तथा चक्रवाटार्धेन नवसहस्रात्मकेन विस्तीर्णा, लोकपालचक्रानुवर्तिनामिन्द्राद्याराधकानां भूतयेऽभ्युदयाय स्वर्ग इत्येताः पुर्यः कविभिर्गीयन्ते । पारिजातः स्वर्गद्रुमविशेषः तत्कुसुमरजोरुणत्वेन मनोरमत्वमासां युक्तम् ॥ ५६ ॥

अथ ब्रह्मणः पुरी

चतुर्दश सहस्राणि
योजनानां स्वयंभुवः ।
मध्ये मनोवती नाम
पुरी लोकेशवन्दिता ॥ ५७ ॥
या चकारारुणानुच्चै-
र्विद्युन्मार्गान्महःश्रिया ।
सावित्र्या स्पर्धमानेव
स्वर्गकामातिवर्तिनी ॥ ५८ ॥

महाश्रियेति तेजोलक्ष्म्या, स्वर्गे कामाः स्वर्गकामाः तेषां ततः प्रवृत्तिनिवृत्तीति स्वर्गका-

मातिवर्तिनीत्वमत एव तेजोतिशययोगाद्ब्रह्म-
पदावाप्तिहेतुत्वाच्च सावित्र्या स्पर्धमानेव ॥५८॥

तस्यामुपासते देवा
मुनयश्च महौजसः ।
महायोगेश्वरैः सिद्धै
यमाद्यैर्भूतवेधसम् ॥ ५९ ॥

तस्यामतुलबला देवा महर्षयश्च महतां यो-
गिनामपि ध्येयं विधातारं सिद्ध्यर्थं यमनियमा-
दिभिरुपासते सेवन्ते । अहिंसासत्यास्तेयब्रह्म-
चर्यापरिग्रहा यमाः, शौचसन्तोषार्जवस्वाध्याये-
श्वरप्रणयना नियमाः ॥ ५९ ॥

तदीशभागे तस्याद्रेः
शृङ्गमादित्यसन्निभम् ।
यत्तज्ज्योतिष्कमित्याहुः
सदा पशुपतिप्रियम् ॥ ६० ॥

तस्या ब्रह्मपुर्या ईशानदिग्गतमेरुशृङ्गमति-
दीप्तं परमेश्वरस्येष्टं ज्योतिष्काख्यम् ॥ ६० ॥

तस्य सानुषु हैमेषु
रत्नचित्रेषु संस्थिताः ।

स्कन्दनन्दिमहाकाल-
गणेशादिगणेश्वराः ॥ ६१ ॥
मूर्ध्नि देवादिदेवस्य
स्थानं त्रिपुरविद्विषः ।
रुद्रायुतगणैर्जुष्टं
ब्रह्माद्यैश्च सुरोत्तमैः ॥ ६२ ॥

तस्य ज्योतिष्कस्य समभूभागेषु प्रकृष्टानां सदाशिवतत्त्वाधोवक्ष्यमाणत्वाद्वरा स्कन्दनन्दीशादयो गणेश्वराः, शिरसि तु ब्रह्मेन्द्रादीनां विनेतुः साक्षाद्भगवतः स्थानमनेकसंख्यैः रुद्रैर्ब्रह्माद्यैश्च देवैः सेवितम् ॥ ६२ ॥

इति मेरुरधोऽस्यान्ते
दिक्षु ये भूधराः स्थिताः ।
तच्छिष्टानि नवद्वीपे
वर्षाण्यस्मिन्निबोध मे ॥ ६३ ॥

इत्थं मेरुरुक्तः, अस्याधो वक्ष्यमाणविष्कम्भशैलाश्चत्वारः । प्राच्यादिदिक्षु ये स्थिताः तद्वर्जितानि वर्षाणि नवास्मिन् जम्बूद्वीपेऽवधारय ॥ ६३ ॥

तत्र विभागाद्रींस्तावदाह

निषधो हेमकूटश्च
हिमवांश्चाचलोत्तमाः ।
मेरोर्दक्षिणतो नीलः
श्वेतः शृङ्गीति वामतः ॥ ६४ ॥

सहस्रद्वयविष्कम्भा
दशोत्सेधा नवान्तराः ।
प्रागायताः सुपर्वाणाः
सागराहितकोटयः ॥ ६५ ॥

मेरोर्दक्षिणदिग्भागे निषधहेमकूटहिमवन्तः । उत्तरे नीलश्वेतशृङ्गवदाख्या विभागाचलाः, एते द्वियोजनसहस्रविष्कम्भा दशसहस्रोच्छ्रायाः, नवसहस्रव्यवधानाः प्राक्पश्चिमदिग्वर्तिक्षारोदलग्नपर्यन्ताः । सुपर्वाण इति, सुष्ठु शोभनानि पर्वाणि वक्ष्यमाणा(ना)न्तरस्थानि वर्षाणि येषाम् ॥ ६५ ॥

तदर्धेनात्तविष्कम्भौ
माल्यवद्गन्धमादनौ ।

याम्योत्तरौ प्राक्प्रतीच्यो-
मेरुतस्तावदन्तरौ ॥ ६६ ॥

निषधादिशैलमानार्धेन गृहीतविस्तारौ सहस्रविस्ताराविति यावत् । दक्षिणोत्तरायतौ मेरुतः प्राच्यां प्रतीच्यां च माल्यवद्गन्धमादनौ । तावदन्तराविति, यावदेव चतुर्दिक्षु स्थितनिषधादिशैलवर्षावृतशिष्टं चतुस्त्रिंशत्सहस्रायाममन्तरं दक्षिणोत्तरदिशोस्तावत्प्रमाणमेवानयोर्मध्यमित्यर्थः ॥ ६६ ॥

तदेव विभागाचलैः परिच्छेत्तुमाह

पश्चान्माल्यवतः प्राच्यां
गन्धमादनशैलतः ।
इलावृतं नीलगिरे-
र्याम्यतो निषधादुदक् ॥ ६७ ॥

माल्यवतोऽद्रेः पश्चिमदिग्भागे गन्धमादनाद्रेः प्राङ् नीलगिरेर्दक्षिणतो निषधादुत्तरे चेलावृतं वर्षं जम्बूद्वीपमध्यस्थम् ॥ ६७ ॥

भद्राश्वं माल्यवत्प्राच्यां
वर्षं भद्रजनाकुलम् ।

सुकेतनं केतुमालं
प्रतीच्यां गन्धमादनात् ॥ ६८ ॥

माल्यवतः प्राक् भद्राश्वं वर्षं गन्धमादनात् प्रत्यक् शोभनगृहं केतुमालं नाम ॥ ६८ ॥

निषधाद्धरिवर्षं यद्-
याम्यतो हेमकूटतः ।
नाम्ना किंपुरुषं ख्यातं
भारतं हिमवद्गिरेः ॥ ६९ ॥

रम्यकाख्यमुदङ्नीला-
द्धिरण्यं श्वेतपर्वतात् ।
यदुत्तरे शृङ्गवतः
कुरुवर्षं तदुच्यते ॥ ७० ॥

विष्कम्भशैलाश्चत्वारो
मेरोः स्थैर्याय वेधसा ।
लक्षार्धोन्नतयः क्लृप्ता-
स्तेषां पूर्वेण मन्दरः ॥ ७१ ॥

श्वेतो हरिद्राचूर्णाभो
याम्यतो गन्धमादनः ।

प्रतीच्यां विपुलो नीलः
सुपार्श्वः सौम्यतोऽरुणः ॥७२॥
सहस्रयोजनच्छाया-
स्तेषु कल्पद्रुमाः स्थिताः ।
कदम्बजम्ब्वावश्वत्थ-
न्यग्रोधौ चोत्तरान्तिकाः ॥७३॥

मेरोर्दार्ढ्यार्थं श्वेतनीलपीतारुणवर्णाः प्राच्यादिदिक्षु मन्दरगन्धमादनविपुलसुपार्श्वाख्या विष्कम्भाः पञ्चाशत्सहस्रोच्छ्रायाः सृष्टाः। येषु योजनसहस्रोन्नतयः कदम्बजम्ब्वादयश्च कल्पपादपाः स्थिताः ॥ ७३ ॥

जम्बूफलरसोद्भूता
मेरुं पर्येत्य निम्नगा ।
विवेश मूलमेवास्य
कनकीकृत्य तां महीम् ॥ ७४ ॥
तं पीत्वा पक्षिसर्पाखु-
मृगशाखामृगादयः ।

बभूवुः काञ्चना ये च
सत्त्वास्तस्यां कृताप्लवाः ॥ ७५ ॥

पर्येत्य प्रदक्षिणं कृत्वा, अस्येति मेरोः, शाखामृगा वानराः । आदिग्रहणेन गजाश्वादयः ॥ ७५ ॥

द्वीपकेतुरभूज्जम्बूः
कल्पशाखिषु सत्स्वपि ।
प्रभावातिशयात्ख्यातं
जम्बूद्वीपमिदं ततः ॥ ७६ ॥

द्वीपानां केतुर्ध्वजो द्वीपकेतुः ॥ ७६ ॥

अथ विष्कम्भशैलानां सरांस्युपवनानि चोच्यन्ते

तत्र

प्राच्यां विष्कम्भशैलस्य
मूले चैत्ररथं वनम् ।
सरोऽरुणोदकं नाम
तत्र हेमाब्जमण्डितम् ॥ ७७ ॥

स्पष्टम् ॥ ७७ ॥

याम्याद्रिमूले गन्धर्व-
सुरसिद्धाप्सरोवृतम् ।
नन्दनं मानसं तत्र
सरो मानसतस्करम् ॥ ७८ ॥

दक्षिणे विष्कम्भशैलमूले नन्दनाख्यमुपवनम्, सरश्चात्र मनोहारि मानसं नाम ॥ ७८ ॥

वैभ्राजं वैपुले मूले
सितोदश्च ह्रदोत्तमः ।
देवैर्निषेव्यते छन्नः
कमलैरंशुमत्प्रभैः ॥ ७९ ॥

विपुलाख्यस्याद्रेर्मूले वैभ्राजाख्यं वनं सितोदकं नाम सरः यदर्ककान्तिभिरब्जैर्मण्डितं सुरैरासेव्यते ॥ ७९ ॥

सौपार्श्वे धृतिमन्नाम
काननं भद्रको ह्रदः ।
सौगन्धिकाम्बुजच्छन्नः
सेव्यते पितृभिः सदा ॥ ८० ॥

सुपार्श्वस्य मूले धृतिमद्वनं पितृसेव्यमति-

सुरभ्यब्जच्छन्नं भद्रकाख्यं सरः । साम्प्रतमिलावृतादिद्वीपनिवासिनो जनस्याहारायुःकान्त्यादिवर्णनम् ॥ ८० ॥

त्रयोदशसहस्रायु-
र्जम्बूफलरसाशनः ।
मेर्वालोकोपलब्धार्थो
जनः सुत्वगिलावृते ॥ ८१ ॥

मेर्वालोकेन च द्वीपेन प्रकाशेनाधिगतपदार्थः । सुत्वगिति कान्तच्छविः ॥ ८१ ॥

वर्षायुतायुर्नीलाब्ज-
द्युतिः पनससारभुक् ।
केतुमाले जनो दिव्य-
देहबन्धः सुखी बली ॥ ८२ ॥

वर्षाणामयुतं दशसहस्राणि आयुर्यस्य स तथा । पनसाख्यानि फलानि तेषां सारो निःष्यन्दस्तं भुङ्क्ते इति पनससारभुक् ॥ ८२ ॥

चन्द्रबिम्बद्युतिर्नीला-
ब्जाशनो भद्रवाजिनि ।

दशवर्षसहस्रायु-
दुःखशोकभयोज्झितः ॥ ८३ ॥

भद्रवाजिनि इति भद्राश्वे वर्षे ॥ ८३ ॥

त्रिंशदब्दसहस्रायुः
कामवृक्षफलाशनः ।
युग्मप्रसूतिः कुरुषु
श्यामापुष्पद्युतिर्जनः ॥ ८४ ॥

कामादिच्छातो वृक्षफलाशनं यस्य, यथेष्टानि वृक्षफलानि निर्माय भुङ्क्ते इत्यर्थः । कुरुषु इति कुरुवर्षे । युग्मप्रसूतिः युगपत् कन्याकुमारौ स्तः । श्यामा प्रियङ्गुः तत्पुष्पद्युतिगौरप्रायकान्तिः ॥ ८४ ॥

अथात्रैव वर्षे संनिकर्षस्थौ चन्द्रद्वीपभद्राकरद्वीपौ उच्येते

भूतवेदसहस्रौ द्वा-
वेकदिक्संधिलक्षितौ ।
सोमवाय्वाशयोः सिद्ध-
मुनिचारणसेवितौ ॥ ८५ ॥

चन्द्रभद्राकरौ द्वीपौ
चन्द्ररक्ताब्जरुग्जनौ ।
ऐलावृतं तयोरायुः
फलं मूलं च भोजनम् ॥ ८६ ॥
अन्तर्भावः कुरुष्वब्धौ
सान्निध्यात्कीर्तितौ ततः ।

कुरुवर्षोपान्तवर्तिनि क्षाराब्धौ पञ्चचत्वारिंशद्योजनसहस्राणि आवृत्य स्थितौ, एकेन दिक्संधिना लक्षितौ दृश्यमानौ उत्तरवायव्यदिग्गतौ सिद्धादिजुष्टौ चन्द्रभद्राकरौ द्वीपौ ज्ञेयौ । तत्र चन्द्रद्वीपे चन्द्रद्युतिर्जनः, भद्राकरद्वीपे च रक्ताब्जरुचिः । तद्वासिनां चेलावृतोक्तमायुः । अशनं च फलमूलानि । अब्धौ यद्भूतवेदसहस्रसंख्यं स्थानं तस्मिन् स्थितौ इति व्यधिकरणे सप्तमी । सान्निध्यात् सामीप्यात् ॥

अध्यर्धानि सहस्राणि
द्वादशायुर्हिरण्वति ॥ ८७ ॥

जनस्येन्दुत्विषो नित्य-
मश्नतो लाकुचं फलम् ।

हिरण्यवत्संज्ञे वर्षे लकुचफलाशिनश्चन्द्रकान्तेर्जनस्य सार्धानि द्वादशसहस्राण्यायुः ॥

नीलनीरजरम्यस्य
रम्यके द्वादशास्थितिः ॥ ८८ ॥
जनस्याब्दसहस्राणि
न्यग्रोधफलमश्नतः ।

रम्यकाख्ये वर्षे नीलाब्जद्युतेर्जनस्य वरफलाशिनो द्वादशसहस्राणि स्थितिः ॥

रजतद्युतिरिक्ष्वाद-
स्तावदायुर्हरौ जनः ॥ ८९ ॥
रौक्मः किंपुरुषे प्लक्ष-
भोजनोऽब्दायुतस्थितिः ।

हरिवर्षे रजतप्रभः प्रागुक्तायुः । इक्षुमेवान्नत्वेन आ समन्तादत्ति इति इक्ष्वादः[1] । जनः किंपुरुषवर्षे हेमाभः प्लक्षफलाशी अब्दायुतजीवी च ॥

१ इक्ष्वादादनन्तरं 'तदेव भोजनो' इत्यधिकः पाठः 'क' पुस्तके ।

इति किंपुरुषादीनि
वर्षाण्युक्तानि यानि ते ॥ ९० ॥
न तेष्ववस्थाभेदोऽस्ति
विवर्तिषु कृतादिषु ।
युगानुरूपप्रज्ञायु-
स्तेजोबलधनप्रजः ॥ ९१ ॥
कृष्टाकृष्टाशनो दुःख-
त्रयार्तो भारते जनः ।
गुण एको यदुद्युक्तो
नेष्टं किंचिन्न साधयेत् ॥ ९२ ॥
सर्वासां फलभूमीनां
कर्मभूः कारणं यतः ।

इत्थमुक्ते किंपुरुषादिवर्षे युगपरिवर्तनेऽपि नावस्थाभेदोऽस्ति । अस्मिंस्तु भारते वर्षे जनः कृतादियुगानुसारीणि बुद्धिजीवितकान्तिवीर्यार्थापत्यानि यस्य स तथाविधः । एतानि बुद्ध्यादीनि कृतादिषु युगेषु जनस्य यथायथं ह्रासवन्तीत्यर्थः । आध्यात्मिकाधिदैविकाधिभौ-

तिकदुःखत्रयार्तः कृष्टजाताकृष्टजातभोजी चात्र जनः । एकस्त्वयं गुणो यत्कृतोद्यमः किं पुनर्न साधयेत्, सर्वमेव साधयितुमलमिति यावत् । कुत इत्याह, सर्वासां यस्मात्फलभूमीनामियं कर्मभूमिः कारणम् ।

'कर्मभूमिरियं ब्रह्मन् फलभूमिरतः परा ।
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ॥'

इति । सर्वासामित्यतिशयोक्तिरन्यत्रासंभवात् ॥

नवाब्धिस्रोतसि द्वीपा
नव चात्रार्धकस्थले ॥ १३ ॥
इन्द्रद्वीपप्रभृतयो
नामतस्तान्निबोध मे ।

अत्र भारते वर्षे नवभिरब्धिस्रोतोभिर्युक्ते । अर्धं कं येषां तानि अर्धकानि जलावृतार्धानि स्थानानि यत्र तस्मिन् तादृशि । यथोक्तं श्रीमत्किरणे

'जलं पञ्च स्थलं पञ्च'

इति । एवंविधे भारते वर्षे इन्द्रद्वीपादिद्वीपनवकं नामतोऽभिधीयमानमवधारय ॥

अथ तदाह

इन्द्रद्वीपः कशेरुश्च
ताम्रपर्णो गभस्तिमान् ॥ ९४ ॥
नागद्वीपश्चान्द्रमसो
गान्धर्वो वारुणस्तथा ।
कुमारिकाख्यो नवमो
नानापर्वतनिम्नगाः ॥ ९५ ॥
नानाजातिजनाकीर्णा
भारताख्ये प्रकीर्तिताः ।

एते नव द्वीपा विविधजातिजनपदसंकुलाः भारतनाम्नि वर्षे कथिताः । द्वीपशब्दोऽर्धर्चादिपाठात् पुंस्यपि ज्ञेयः ॥

आग्नीध्रो नाम नृपति-
र्जम्बूनाथो मनोः कुले ॥ ९६ ॥
तज्जातनृपसंज्ञाभिः
कथ्यन्ते भारतादयः ।

मनुवंशस्याग्नीध्रनाम्नो जम्बूद्वीपाधिपतेः भरतादयो नव पुत्रा आसन् । तत्साधितानि ज-

म्बूद्वीपखण्डानि नव भारतादिसंज्ञाभिः प्रसिद्धानि ॥

अथाब्धिसप्तकान्तरितद्वीपसप्तकमुच्यते

क्षारक्षीरदधिस्नेह-
रसमध्वामृतोदकैः ॥ ९७ ॥
लक्षादिद्विगुणा द्वीपा
जम्बूद्वीपादयो वृताः ।

जम्बुद्वीपादिद्वीपसप्तकं क्षारक्षीराद्यब्धिसप्तकेन लक्षादिद्विगुणप्रमाणेनान्तरितं ज्ञेयम् । जम्बुद्वीपाख्यायाः कारणं

'द्वीपकेतुरभूज्जम्बूः'

इत्यादि पूर्वमुक्तम् ॥

इदानीं शाकादिद्वीपानां स्वसंज्ञया अर्थवत्तां वक्ति

शाके शाकद्रुमस्त्वङ्गः
शाकसंज्ञानिबन्धनः ॥ ९८ ॥
कुशोऽभूत्काञ्चनः कौशे
स्वयंभुवि यियक्षति ।

क्रौञ्चे क्रौञ्चो हतो दैत्यः
क्रौञ्चाद्रौ हेमकन्दरे ॥ ९९ ॥
स्कन्देन युद्ध्वा सुचिरं
चित्रमायी सुमायिना ।
स शैलस्तस्य दैत्यस्य
ख्यातश्चित्रेण कर्मणा ॥१००॥
केतुतामगमत्तस्य
नाम्ना क्रौञ्चं तदुच्यते ।

शाकद्वीपे शाकाख्यो वृक्ष उन्नतः शाकाख्याहेतुः । ब्रह्मणि यष्टुमिच्छति हेमकुशोत्पत्तिः। कौशे द्वीपे कुशसंज्ञाकारणम् । क्रौञ्चे द्वीपे काञ्चनकन्दरं, क्रौञ्चाद्रौ युध्यमानः क्रौञ्चाख्यो दैत्यः कार्तिकेयेन हतः इति क्रौञ्चोपलक्षितत्वात् क्रौञ्चद्वीपसंज्ञा ॥

शाल्मले शाल्मलीवृक्षो
हैमः साहस्रिकोऽर्कभाः ॥१०१॥
प्रियोऽमराणां तत्केतुः
स तदाख्यानिबन्धनः ।

सहस्रयोजनोन्नतः सूर्यद्युतिः शाल्मलीवृक्षः शाल्मलिद्वीपे, अस्याख्या निबन्धनं स्थानम् ॥

गोमेदे गोपतिर्नाम
राजाभूद्गोसवोद्यतः ॥ १०२ ॥
याज्योऽभूद्वह्निकल्पाना-
मौतथ्यानां मनोः कुले ।
स तेषु हरियज्ञाय
प्रवृत्तेषु भृगून् गुरून् ॥१०३॥
वव्रे तं गौतमः कोपा-
दशापद्गमत्क्षयम् ।
यज्ञवाटेऽस्य ता गावो
दग्धाः कोपाग्निना मुनेः॥१०४
तन्मेदसा मही छन्ना
गोमेदः स ततोऽभवत् ।

गोसवाख्ययज्ञकृत् गोपतिसंज्ञो राजा मनुवंश्यः उतथ्यवंश्यानामग्निवत्तेजस्विनामौतथ्यानां याज्योऽभूत् । तेषु औतथ्येषु इन्द्रयज्ञार्थं गतेषु भृगून् गुरुत्वेऽवृणीत सः । गावो गौत-

मक्रोधाग्निना दग्धाः तन्मेदच्छन्नभूतलत्वात् गोमेदसंज्ञो द्वीपः ॥

नदी पुष्करिणी नाम
हेमपुष्करमण्डिता ॥ १०५ ॥
तया स पुष्करद्वीपः
ख्यापितः सुरसेवितः ।

हेमाब्जया पुष्करिण्याख्यया नद्योपलक्षितो देवजुष्टः पुष्करद्वीपः ॥

यथा किंपुरुषाद्येषु
कृतावासः सदा जनः ॥१०६॥
शाकद्वीपादिषु तथा
क्षीरादिकृतभोजनः ।
हिमेन्दुहिमनीलाब्ज-
सस्यकस्फटिकद्युतिः ॥ १०७ ॥
दशवर्षसहस्रायु-
र्नष्टदुःखैककण्टकः ।

किंपुरुषादिषु वर्षेषु यद्वत्त्रेतादियुगेष्वपि कृतयुगावस्थो जनः, तथा शाकादिद्वीपेषु क्षी-

राद्याहारो यथाक्रमं तुहिनचन्द्रादिकान्तिर्दश-वर्षसहस्रजीवी दुःखाख्यमहाकण्टकनिर्मुक्तो ज्ञेयः ॥

सप्तमादुदधेरर्वाक्
द्वे कोटी सत्रिकं दलम् ॥१०८॥
पञ्चाशच्च सहस्राणि
कर्णाद्धेमाद्रिगर्भतः ।

सप्तमादुदधेरर्वागिति मेर्वाभिमुख्येन तस्यैव मेरोर्गर्भतः, तन्मध्यभागादारभ्य कर्णादिति विष्कम्भशैलानामन्तरालभागादिलावृतवर्षज-नितकोणात् कोटिद्वय, त्रिकेण सहितं दलं कोट्यर्धत्रिपञ्चाशल्लक्षाणि सहस्रपञ्चाशत्प्रमा-णम् ॥

ततो हिरण्मयी भूमि-
र्नानारत्नद्रुमाचला ॥ १०९ ॥
क्रीडार्थं वेधसा सृष्टा
देवानां दशकोटिकी ।

विविधानि रत्नानि द्रुमाश्चाद्रयश्च यस्यां सा

तादृक् । सुराणां विहरणाय हेममयी योजनकोटिदशकप्रमाणा भूर्धात्रा निर्मिता ॥

लोकालोको बहिस्तस्या
लोकालोकनियामकः ॥ ११० ॥
योजनायुतविष्कम्भ-
स्तुङ्गश्रृङ्गपरिच्छदः ।

अन्तःस्थितं लोकं बहिस्थितं चालोकं नियमयतीति लोकालोकनियामकः, तद्बाह्ये लोकाभाव इत्यर्थः । योजनायुतविष्कम्भ इति दशसहस्रविस्तारः । अत्युच्छ्रितश्रृङ्गपरिवारः ।

तस्य श्रृङ्गेषु तीक्ष्णांशो-
र्भासश्चन्द्रातपोपमाः ॥ १११ ॥
न तापयति वैकृष्टया-
द्धामान्याशाभृतां मुने ।

लोकालोकस्याद्रेरत्युन्नतत्वात् शिखरस्थानि लोकपालविहरणगृहाणि अर्कभाभिर्विप्रकृष्टत्वात् ज्योत्स्नावदालोकमात्रहेतुभिर्न ताप्यन्ते ॥

तमः परस्तान्निबिडं
लक्षाण्येकोनविंशतिः ॥ ११२ ॥

चत्वारिंशत्सहस्राणि
पञ्चत्रिंशच्च कोटयः ।
सप्तविंशतिलक्षाणि
कोटिश्चैका समुद्रराट् ॥११३॥
हैमं कटाहकं कोटि-
गर्भोदेति समन्ततः ।

लोकालोकस्य बहिस्तमः अन्धकारं पञ्चत्रिंशत्कोटयः एकोनविंशतिलक्षाणि सहस्रचत्वारिंशता सह, तद्बाह्ये तु गर्भोदाख्योऽब्धिराजो योजनकोट्या सप्तविंशत्या च लक्षैर्विस्तीर्णः, तस्यापि बहिः कोटिप्रमाणं काञ्चनं कटाहमिति कोटिशतप्रविभागः ॥

एवं भूर्लोकस्य विस्तारात्प्रमाणमुक्त्वा भुवर्लोकादिलोकषट्कस्योच्छ्रायमानमाह

तिथिलक्षो भुवर्लोको
ध्रुवे प्रान्तो महीतलात् ॥११४
तदूनकोटिस्वर्लोक-
स्वर्गिवर्यसमाश्रयः ।

महर्द्धिकोटिर्यत्रास्ते
मरीच्यादिमुनिव्रजः ॥ ११५॥
जनोऽष्टकोट्यवच्छिन्नः
पितृजह्नुजनाश्रयः ।
तपोऽर्ककोटिर्यत्रास्ते
महायोगी सनन्दनः ॥ ११६ ॥
ऋभुः सनत्कुमारश्च
सनकश्च महातपाः ।
ततः सत्याधिपस्थानं
सत्यलोकः स्वयम्भुवः ॥११७॥
कामातिशयसंपन्नः
कोटयो नव सप्त च ।
सावित्री मूर्तिमत्यास्ते
यत्र वेदाश्च सानुगाः ॥ ११८॥

महीतलात् भूपृष्ठादारभ्य ध्रुवप्रान्त इति ज्योतिश्चक्रावलम्बनभूतध्रुवपर्यन्तपञ्चदशलक्षोच्छ्रायो भुवर्लोकः । पञ्चाशीतिलक्षोच्छ्रायस्वर्गिवर्याणां स्वर्वासिमुख्यानामास्पदं स्व-

र्लोकः । महर्लोको मरीच्यादिमुनिवृन्दस्थानं द्विकोटिः । जनलोकस्तु अष्टकोटिपरिच्छिन्नः पितॄणां जह्नुप्रभृतीनां च मुनीनां निवासः । तपोलोको द्वादशकोट्युच्छ्रायः सनन्दऋभु-सनत्कुमारसनकाद्याश्रयः। ततोऽनन्तरं सत्यैक-बुद्धित्वात् सप्तकल्पाधिपत्यस्य ब्रह्मणः स्थानम् । सकलैश्वर्यसंपत्तिमान् षोडशकोट्युच्छ्रितः सत्य-लोकः, यस्मिन् मूर्तिमती सावित्री वेदोपवे-दाश्चासते ॥ ११८ ॥

ततश्चतस्रः षट् चेति
मधुत्रिपुरविद्विषोः ।
स्थाने ज्योतिष्मतीचित्रे
कोटिरण्डकटाहकः ॥ ११९ ॥
शतकोटिप्रविस्तीर्ण
इति ब्रह्माण्डगोलकः ।
भूयसा तुल्य एवायं
सर्वस्रोतःसमानतः ॥ १२० ॥

तदुपरि चतस्रः कोटयो मधुविद्विषः वि-ष्णोः कान्तिमत्स्थानम् । त्रिपुरविद्विषः शंभोः

तादृक् विचित्रं षट्कोटयुच्छ्रायकम् । अण्डक-टाहकश्च एककोटिः । इत्थं भूर्लोकादयो यथा पञ्चाशद्योजनकोटयः । तथा तदूर्ध्वं पञ्चाश-देवेति । ब्रह्माण्डपिण्डः शतकोटिविस्तारो-च्छ्रायः । अयं च सर्वेषूर्ध्वपूर्वदक्षिणपश्चिमोत्त-रेषु स्रोतःसु प्रायेण तुल्यमानाकृतिः ॥१२०॥

तस्य प्राचीं दिशं शक्रः
पात्यग्निः पूर्वदक्षिणाम् ।
दक्षिणां भूतसंहर्ता
राक्षसो दक्षणापराम् ॥ १२१ ॥
पश्चिमां वरुणो देवो
नभस्वान् पश्चिमोत्तराम् ।
उदीचीं सोमपक्षेशा-
वीशः प्रागुत्तरां दिशम् ॥ १२२ ॥
ऊर्ध्वे ब्रह्मा हरिरधः
सर्वार्थावहिताः सदा ।

तस्य ब्रह्माण्डस्य प्राच्यादिदिक्पालका इ-न्द्रादयः । उदीच्यां सोमवैश्रवणौ । ऊर्ध्वे ब्रह्मा

पालकः स्थितः, अधस्तु विष्णुः, एते च नित्यं सर्वात्मना सावधानाः स्थिताः ॥

एषामपि नियन्तारो
रुद्रा दश दश स्थिताः ॥१२३॥
भूतिमन्तोऽप्यमी येषां
नोत्क्रामन्ति भयात्पदम् ।
नानारूपैर्महावीर्यै-
स्तरुणार्कसमप्रभैः ॥ १२४ ॥
वृता नानायुधधरै-
र्नामभिस्तान्निबोध मे ।

एषां लोकपालानां रुद्रा अधिष्ठातारः प्रतिदिशं दश दश स्थिताः, यद्भीत्या महैश्वर्यैर्युक्ता अपि एते स्वं स्वं स्थानं पालकत्वेन नोज्झन्ति । एते चानेकाकारैः विचित्रायुधैरतिबलैर्बालार्ककान्तिभिरनुचरैर्वृताः ॥

अथैषां नामान्याह

बुध्नवज्रशरीराज-
कपालीशप्रमर्दनाः ॥ १२५ ॥

प्राग्विभूत्यव्ययौ शास्ता
पिनाकी त्रिदशाधिपाः।

एते शक्रस्य नियन्तारः॥

अथाग्नेः

भस्मक्षयान्तकहर-
ज्वलनाग्निहुताशनाः॥ १२६॥
पिङ्गलः खादको बभ्रु-
र्दहनश्चाग्निदिग्गताः।
विधातृधातृकर्त्रीश-
कालमृत्युवियोजकाः॥ १२७॥
याम्यधर्मेशसंयोक्तृ-
हराश्च यमनायकाः।

निर्ऋत्यधिपतीनाह

निर्ऋतिर्मारणक्रोध-
हन्तृधूम्रविलोहिताः॥ १२८॥
ऊर्ध्वलिङ्गविरूपाक्ष-
दंष्ट्रिभीमाः पलादपाः।

पलं मांसमत्तीति पलादः पिशिताशनो राक्षसो निर्ऋतिः, तं पान्तीति पलादपाः ॥

अथ वरुणेश्वराः

बलातिबलपाशाङ्क-
श्वेतभूतजलान्तकाः ॥ १२९ ॥
महाबलमहाबाहु-
सुनाद्यब्दरवाः कपाः ।

अब्दरवो मेघनादः । कं जलं पान्ति इति कपाः ॥

वाय्वधिपा उच्यन्ते ।

लघुशीघ्रमहद्वेग-
सूक्ष्मतीक्ष्णक्षयान्तकाः ॥१३०॥
कपर्द्यब्देशपञ्चान्त-
पञ्चचूडाश्च वायुपाः ।
निधीशो रूपवान् धन्य-
सौम्यशान्तजटाधराः ॥१३१॥
कामप्रसादलक्ष्मीश-
प्रकाशाश्चेन्दुयक्षपाः ।

इन्दुयक्षपा इति इन्दुयक्षयोरुत्तरदिक्पाल-त्वेन पूर्वमुक्तयोरेते पतयः ॥

विद्येशसर्वविज्ञान-
वेदविज्ज्येष्ठवेदगाः ॥ १३२ ॥
विद्याविधातृभूतेश-
बलिप्रियसुखाधिपाः ।

ईशानदिक्स्थाने इमे विद्येशादयो नियन्तारः॥

अथ तदुपरिष्टादुच्यन्ते

शंभुर्गणाध्यक्षविभु-
त्र्यक्षचण्डामरस्तुताः ॥१३३॥
विचक्षणनभोलिप्सु-
संविवाहाश्च मूर्धनि ।

शंभ्वादयो दश रुद्राः, मूर्धनीति ब्रह्मणोऽधिष्ठातृत्वेन स्थिताः । वाहशब्दः संपूर्वो वि-पूर्वश्च रुद्रयोः संवाहविवाहयोर्वाचकः ॥

ब्रह्माण्डादधोवर्तिनो रुद्रान् कथयितुमाह

क्रोधनानिलभुग्भोगि-
ग्रसनोदुम्बरेश्वराः ॥ १३४ ॥

वृषो विषधरोऽनन्तो
वज्रो दंष्ट्री च विष्णुपाः ।
ततोऽम्भःप्रमुखा भोग-
भूमयस्तासु संस्थिताः ॥१३५॥
पञ्चाष्टका नियोक्तृणां
क्षेत्रावाप्तफलश्रियः ।

अनन्तरं ब्रह्माण्डस्योपरिष्टात् यथायथं जलाद्या भोगभूमयः । तासु चाष्टकाः अष्टपरिमाणाः पञ्च गणा रुद्राणां स्थिताः । कीदृश इत्याह, नियोक्तृणां क्षेत्रावाप्तफलश्रियः, क्षेत्रात्तदध्यासितात् स्थानादवाप्ता या फलश्रीस्तस्या नियोक्तृणां संपादकानां, तत्तदध्यासितक्षेत्रफलसंपत्तिस्तत्प्रसादादेव फलतीत्यर्थः ॥

अतस्तेषां नामान्याह

भारभूत्याषाढिडिण्डि-
लाकुल्यमरपुष्कराः ॥ १३६ ॥
प्रभासनैमिषौ चेति
गुह्याष्टकमिदं जले ।

एतदम्भस्तत्त्वस्थं गुह्याष्टकम् ॥

श्रीशैलजल्पकेदार-
भैरवाम्रातकेश्वराः ॥ १३७ ॥
हरिश्चन्द्रमहाकाल-
मध्याः सातिपदा रुचौ ।

सातिपदा इति, सहातिपदेन एते वर्तन्ते, अतिगुह्याष्टकमेतत् इति यावत् । रुचाविति तेजस्तत्त्वे व्यवस्थिता इत्यर्थः ॥

महेन्द्रभीमविमल-
कुरुक्षेत्रगयाखलाः ॥ १३८ ॥
सनापदोत्तराः साट्ट-
हासाः सनाखलाः खगे ।

सनापदोत्तरा इति, सह 'ना' पदेन वर्तत इति सनापदः उत्तरोऽन्त्यः, खलशब्देनोक्तो रुद्रो येषां ते महेन्द्राद्याः सनाखला इत्यर्थः । खगे नभस्वति वायुतत्त्वे ॥

स्थाणुस्वर्णाक्षगोकर्ण-
भद्रकर्णमहालयाः ॥ १३९ ॥

वस्त्रापदाविमुक्ताह्व-
रुद्रकोट्यः खमण्डले ।
पवित्राष्टकमित्याहुः

खमण्डले इत्याकाशतत्त्वे एतत्पवित्राष्टक-मिति वदन्ति ॥

गर्वे मात्रेन्द्रियोदरे ॥ १४० ॥
स्थाण्वष्टकं द्विजश्रेष्ठ
नामतः कथयामि ते ।
माकोटमण्डलेशान-
द्विरण्डछगलाण्डकाः ॥ १४१ ॥
स्थूलस्थूलेश्वरौ शङ्कु-
कर्णकालञ्जरावपि ।

गर्व इत्यहङ्कारे तन्मात्रेन्द्रियतत्त्वान्तरे माकोटादिस्थाण्वष्टकं स्थितम् ॥

अथ बुद्धितत्त्वस्थं भुवनाष्टकमाह

सूक्ष्मामरपुराण्यष्टौ
बुद्धौ पैशाचमादितः ॥१४२॥

राक्षसं याक्षगान्धर्वं
माहेन्द्रं च महर्द्धिमत् ।
सौम्यं प्राजेश्वरं ब्राह्मं
दीप्तं परमया श्रिया ॥ १४३ ॥

बुद्धितत्त्वे सूक्ष्मभुवनाष्टकं, तेषु पैशाचमादित इत्यादौ पैशाचं ततो राक्षसादि। ब्राह्मं दीप्तं परमया श्रियेति, महर्द्धिमतो माहेन्द्रादप्यतिशयाद् अधि(क)कान्तिः ॥ १४३ ॥

अथ गुणतत्त्वे योगिनां भुवनाष्टकम्

गौणे योगीशधामानि
त्वकृतं कृतभैरवम् ।
ब्राह्मवैष्णवकौमार-
मौमं श्रैकण्ठमन्ततः ॥ १४४ ॥

ततस्तु

वीरभद्रस्य रुचिम-
द्धाम योगिवरस्तुतम् ।
स्वपदाधोऽधिकारस्थ-
सर्वरुद्राधिकश्रियः ॥ १४५ ॥

स्वस्मात्पदादधोऽधिकरणस्थेभ्योऽप्यधिका श्रीर्यस्य साक्षात्परमेश्वरेणानुगृहीतत्वात् तस्य वीरभद्रस्य योगिभिरभिष्टुतं भास्वरं भुवनम् । अत्रैव चैते रुद्रा गुणतत्त्वमूर्ध्नि स्थिताः ॥ १४५ ॥

के त इत्याह

वामदेवभवानन्त-
भीमोमापत्यजेश्वराः ।
सर्वेशानेश्वरावेक-
वीरैकशिवसंज्ञितौ ॥ १४६ ॥
उग्रः प्रचण्डदृक् चेशो
गुणानां मूर्ध्नि संस्थिताः ।
तपसा गुरुणोपास्य
क्रोधादीन् गुरुतां गताः ॥ १४७ ॥
स्वाधिकारविधौ तीक्ष्णा
रुद्राः सर्वार्थदृक्क्रियाः ।

ऊर्ध्वस्थान् क्रोधेशादीन् महता तपसा आराध्य गुरुतामनुग्रहकर्तृत्वं प्राप्ताः । निजेऽधिकारविधौ तीक्ष्णाः कुशलाः सर्वार्थज्ञानक्रियायोगिनश्चैते ॥

तेभ्यो दशगुणश्रीकान्
प्रधानाधिपतीञ्छृणु ॥ १४८ ॥
क्रोधेशचण्डसंवर्त-
ज्योतिःपिङ्गलसूरगाः ।
पञ्चान्तकैकवीरौ च
शिखेद इति ते स्मृताः ॥१४९॥

वामदेवादिभ्यः प्रागुक्तेभ्यो दशगुणा श्रीर्येषां, त इमे क्रोधेशादयः प्रधानाधिपाः ॥१४९

सर्वेन्द्रियः सर्वतनुः
सर्वान्तःकरणाश्रयः ।
पुरुषे नियतौ यन्ता
काले कलनशक्तिमान् ॥१५०॥

पुरुषतत्त्ववर्तिनि भुवने सर्वेन्द्रियत्वादिविशेषणविशिष्टो रुद्रोऽधिष्ठाता । यदुक्तं प्राक् पुंस्तत्त्वनिरूपणावसरे

'............भौवने रुद्रसंश्रयम् ।'

इति । एवं नियतौ नियन्तृसंज्ञः काले च कलनशक्तिमान् स्थितः ॥ १५० ॥

भुवनेशमहादेव-
वामदेवभवोद्भवाः।
एकपिङ्गेक्षणेशाना-
ङ्गुष्ठमात्राश्च भास्वराः ॥ १५१ ॥
परमेशोपमा राग-
विद्यागर्भे कलापदे।
महापुरचतुःषष्टि-
मण्डले मण्डलाधिपाः ॥ १५२॥

रागविद्ये गर्भे प्रागुक्तरीत्या यस्य तस्मिन् कलाभुवने अष्टाष्टकक्रमेण श्रीमन्मतङ्गाद्युक्तेन महापुरचतुःषष्टिमण्डलं यत् स्थितं तत्रामी भुवनेशादयो भुवनाधिपतयः परमेश्वरोपमशक्तिमत्त्वात् सुकान्तयः स्थिताः। कथं पुनश्चतुःषष्टिमण्डलं स्थितमितीह नोक्तं श्रीमन्मतङ्गादिनोक्तं ज्ञेयम् ॥ १५२ ॥

अथ तेषामप्यधिपतीनाह

अनन्तस्त्रिकलो गोप्ता
क्षेमीशो ब्रह्मणः पतिः।

ध्रुवतेजोधिपौ रुद्रौ
गहनेशश्च विश्वराट् ॥१५३॥
मायाधिकारिणो रुद्रा
मण्डलाधिपतीश्वराः ।
संसारचक्रकारूढ-
भूतग्रामविवर्तकाः ॥ १५४ ॥
एतावत्येव घोरेयं
सर्वभूतभवावनिः ।
सीदन्त्यज्ञानिनो यस्यां
पङ्के गाव इवाचलाः ॥१५५॥

अमी मायाधिकारिणोऽनन्तेशादयोऽष्टौ रुद्राः संसार एवाजस्त्रभ्रमाच्चक्रं तदारूढस्य भूतग्रामस्य विवर्तकाः संसरणकराः । इयत्येव चैषा घोरा अशिवा सर्वभूतानां भवभूमिर्यस्यामविद्वांसः कर्दमनिमग्नाशक्तवलीवर्दवदवसादं यान्ति ॥ १५५ ॥

अथ विद्याभुवनस्था विद्याराज्य उच्यन्ते

भृगुणी ब्रह्मवेताली
स्थाणुमत्यम्बिका परा ।

रूपिणी नन्दिनी ज्वाला
सप्त सप्तार्बुदेश्वराः ॥ १५६ ॥
विद्याराज्ञ्यस्तु कथिता
विद्यायां रुद्रसंस्तुताः ।

एताः सप्त विद्याराज्ञ्योऽनन्तरोक्तमण्डलाधिपतिरुद्राभिष्टुताः सप्तानामर्बुदानां मन्त्रकोटीनामीश्वर्यः ॥

तासामुपरि दीप्तश्री-
र्देवो विद्याधिपः स्थितः ॥१५७॥
मन्त्रेशेशचिदाविष्ट-
रुद्रव्यूहाष्टकानुगः ।
उच्छुष्माः शम्बराश्चण्डा
महावीर्याः पदद्रुहः ॥ १५८ ॥
रुद्रा गणाः सदिक्पालाः
शास्त्राणि पतयस्ततः ।
ते चानन्तप्रभृतयो
गदिता एव नामतः ॥ १५९ ॥
स्वस्वरूपाश्च ते विप्र
पूर्वं प्रश्नानुषङ्गतः ।

भृगुणीप्रभृतीनां विद्याराज्ञीनामूर्ध्वं विद्याधिपाख्यो रुद्रो दीप्तश्रीर्निरतिशयज्ञानक्रियासंपद्युक्तः स्थितः । कीदृगित्याह मन्त्रेशेशेति, मन्त्रेशानामनन्तादीनां प्रेरकत्वेन ईश ईश्वरभट्टारकस्तच्चिदाविष्टास्तदुत्तेजितदृक्क्रिया ये रुद्रास्तेषां व्यूहाष्टकं तदनुगं यस्य स व्यूहाष्टकानुगः । तत्र ये रुद्राः स्थितास्त ईश्वरप्रेर्या इत्यर्थः । उक्तं च

'ईश्वरोऽधःस्थविद्यानां पतीन्संप्रेरयत्यणून् ।
तेन प्रेरितमात्रास्ते कुर्वतेऽधस्तनं जगत् ॥'

इति । उच्छुष्मादयश्च रुद्राः । गणाश्चात्र देवीस्कन्दचण्डेशवृषप्रभृतयो, दिगीश्वराश्चेन्द्रादयः, शास्त्राणि च निश्वासकारिकादीनि, पतयश्चानन्तादयः स्थिताः । ते चानन्तादयो नाम्ना स्वरूपेण च प्रश्नानुक्रमेण पूर्वमुक्ताः ॥

सादाशिवे पवित्राङ्ग-
सकलादिपरिच्छदः ॥ १६० ॥
देवः सदाशिवो बिन्दौ
निवृत्त्यादिकलेश्वराः ।

नादे ध्वनिपतिः शक्तौ
सर्वशक्तिमतां वरः ॥ १६१ ॥
योनिर्विश्वस्य वागीशाः
पतयः परतः शिवः ।

सदाशिवभुवने पवित्राणि सद्योजातादीनि ब्रह्माणि, अङ्गानि च सर्वात्मसुशिवज्वालिन्यादीनि, सकलनिष्कलाख्यादयश्चाष्टौ रुद्राः परिच्छदः परिवारो यस्य स एवंविधः सदाशिवनाथः स्थितः । बैन्दवे तु स्थाने निवृत्तिप्रतिष्ठाविद्याशान्त्याख्यकलाधिपतिचतुष्कम् । नादभुवने ध्वनिपतिर्नादेश्वरः स्थितः । यथोक्तं नादाधिकारे श्रीमत्स्वतन्त्रे

'सुषुम्नेशः स्थितस्तत्र चन्द्रकोट्यर्बुदप्रभः ।
दशबाहुस्त्रिनेत्रश्च श्वेतपद्मासने स्थितः ॥
शशाङ्कशेखरः श्रीमान् पञ्चवक्त्रो महातनुः ।'

इति । शक्तावपि शाक्तसंश्रये सकलशक्तिमतां वरिष्ठः परमेश्वरः स्थितः । अत्रैव च योनिर्विश्वस्येति नादबिन्द्वादिक्रमेण सकलजगदुत्पत्तिहेतुः कुण्डलिन्याख्या शक्तिः स्थिता । यथोक्तं श्रीमत्स्वतन्त्रे

'तत्र कुण्डलिनी शक्तिर्मायाकर्मानुसारिणी ।
नादबिन्द्वादिकं कार्यं तस्या इति जगत्स्थितिः ॥'

इति । वागीशाः पतय इत्यस्मिन्नेव स्थाने ये भुवनेश्वरत्वेन स्थिताः । यथोक्तं तत्रैव

'भुवनाधिपतीनां च हेतुस्तद्वासिनां प्रिये ।'

इति । परतः शिव इति सकलकारणातीतं निष्कलं परं शिवस्वरूपं ज्ञेयम् । तथाहि श्रीमत्स्वतन्त्र एवोक्तं

'तदतीतं वरारोहे परं तत्त्वं निरामयम् ।'

इति ॥

अथैतदाक्षेप्तुं मुनिः प्रश्नयति

सदाशिवशिवान्ताध्व-
कल्पिताणुवपुःस्थितिः ॥१६२॥
सर्वातिशयविश्राम-
स्तदूर्ध्वं पतयः कथम् ।

सदाशिवतत्त्वादूर्ध्वं शिवतत्त्वान्तं यावद्योऽध्वा तत्राणूनां निवृत्त्यादिकलेश्वराणां ध्वनिपतिप्रभृतीनां च वपुःस्थितिर्दिव्यदेहयोगः कल्पितः । तत्र च सदाशिवतत्त्वे सर्वातिशयविश्रामः, न हि ततोऽन्यन्निष्कलशिवतत्त्वादृते अतिशायि किमप्यस्ति । एवं च कथं तदूर्ध्वं पतय उक्ताः ॥

सिद्धान्तः

ईशानतीत्य शान्तान्तं
तत्त्वं सादाशिवं स्मृतम् ॥१६३॥
भुवनान्यपि नादादि-
कला नान्यः पतिः शिवात् ।

अनन्तेशादिविद्येश्वरोपलक्षितमीश्वरतत्त्व-मतिक्रम्य निष्कलतत्त्वान्तं सदाशिवतत्त्वं ज्ञेयम् । अत्र च नादबिन्द्वादिकला एव भुवनत्वेन बोद्धव्याः, शिवभट्टारक एव चात्र सर्वतत्त्वाधिपतिर्नान्यः कश्चित्, ततश्च तदूर्ध्वं पतयः कथमित्यस्य चोद्यस्यानवकाशः ॥

यद्येवं

'नादे ध्वनिपतिः शक्तौ सर्वशक्तिमतां वरः ।'

इति भिन्नत्वं पतीनां यदुक्तं तत्कथमित्याह

किंतु यः पतिभेदोऽस्मिन्
स शास्त्रे शक्तिभेदवत् ॥ १६४॥
कृत्यभेदोपचारेण
तद्भेदस्थानभेदजः ।

शिवभट्टारकादन्यो नात्राधिपतिः किंतु निवृत्त्यादिकलेश्वराणां योऽस्मिन् शास्त्रे भेदः स यथैकस्या एव शक्तेः कृत्यभेदोपचारेण वामादिभेदभिन्नत्वमेवं स्थानभेदहेतुकः कृत्यभेदकृतश्च ज्ञेयः ॥

तमेवं कार्यभेदं दर्शयितुं बिन्दुभुवनस्थनिवृत्त्यादिकलेश्वरचतुष्टयस्य साधारणं तावद्रूपमाह

करोत्युन्मीलनं याभिः
शक्तिभिर्नरतेजसः ॥ १६५ ॥
ता निवृत्त्यादिसंज्ञानां
भुवनानामधीश्वराः ।

आणवस्य सर्वज्ञत्वसर्वकर्तृत्वात्मनस्तेजसो याभिः शक्तिभिः प्रकाशनं देवः कुरुते ताः शक्तय एव निवृत्तिप्रतिष्ठादिसंज्ञानां भुवनानामीश्वरत्वेनोक्ताः, इत्येतत्समानमासां स्वरूपम् ॥

अथासाधारणं चाह

निवर्तयति भूतानि
यया सास्य निवर्तिका ॥१६६॥

निवृत्तिरिति तत्स्थानं
तत्रेशोऽपि निवृत्तिमान्।

यया शक्त्या चतुर्दशविधं भूतसर्गं निवर्तयति संसारवैतृष्ण्यजननेन कैवल्याभिमुखं संपादयति सा भगवतः शक्तिर्भवनिवर्तनव्यापारकारिणी। तच्च तदधिष्ठेयं स्थानं निवृत्तिसंज्ञं तदधिपतिश्च परमेश्वरो निवृत्तिमानित्ययमसौ स्थानभेदात् कृत्यभेदाच्च भाक्त उक्तो भेदः। एवं प्रतिष्ठादीनामपि ज्ञेयम्॥

तथाहि

निवृत्तस्य गतिर्भूयो
यया प्रच्यावलक्षणा॥ १६७॥
निषिध्यते प्रतिष्ठा सा
स्थानं तद्वांश्च तत्पतिः।

अभिध्यानानुगृहीतस्योन्मोच्यस्याणोः पुनरधोऽध्वनि संसारलक्षणा गतिर्यया निषिध्यते सा गतिनिवृत्तिहेतुत्वात् प्रतिष्ठाख्या शैवी शक्तिः, स्थानं च तत्प्रतिष्ठाभुवनं, तदीश्वरश्च प्रतिष्ठाधिपतिसंज्ञो विज्ञेयः॥

त्यक्त्वाप्तगम्यविषयं
यया ज्ञानं ददात्यणोः ॥१६८॥
सा विद्या स्थानमप्यस्या
विद्येशश्च तदीश्वरः ।

आप्तविषयं शब्दविषयं गम्यविषयं चानुमेयं ज्ञानं त्यक्त्वा पारिशेष्यात् साक्षात्कृताशेषपदार्थजातज्ञानं यया शक्त्या अणोरात्मनः परमेश्वरोऽभिव्यनक्ति सा शक्तिर्विद्याख्या, तच्च भुवनं विद्याख्यं, तदीश्वरश्च विद्याधिपाख्यया बोद्धव्यः ॥

सर्वदुःखप्रशमनं
ययास्य कुरुते हरः ॥१६९॥
सा शान्तिस्तत्पदं चेति
तत्कुर्वन् सोऽपि शान्तिमान् ।

निखिलदुःखप्रशमनं ययाऽस्यात्मनः शिवनाथः करोति सा तदीया शान्तिः शक्तिः, तच्च स्थानं शान्त्याख्यं, तच्च कुर्वन् सोऽपीश्वरः शान्तिमानुच्यते ॥

इत्थं बिन्दुकलाचतुष्कमुक्त्वा नादकलो-त्त्यर्थमाह

ऊर्ध्वाधोविषयालोको
महान्यश्च महत्तरः ॥१७०॥
महत्तमश्च क्रियते
चितो याभिर्विमुच्यतः ।
ता इन्धिकाद्यास्तत्स्थानं
तद्वानीशस्तिसृष्वपि ॥१७१॥

विमोचनं विमुक्तिर्बन्धापगमः । विमुचमिच्छत्यात्मन इति क्यचि कृते शत्रन्तस्य विमुच्यत इति रूपम् । एवं च विमुच्यतो मोक्षैषिणः पुंस ऊर्ध्वाधोविषय आलोकः प्रकाशो महानिन्धिकया विधीयते स एव दीपिकाख्यया महत्तरः संपाद्यते, रेचिकया त्वसावेव महत्तमः क्रियते, तानि चैतासां स्थानानि इन्धिकादिसंज्ञानीति । तिसृष्वप्येतासु कलास्वधिपतिस्तद्वानितीन्धिकाद्युपलक्षितो वेदितव्यः ॥ १७१ ॥

अथ मोचिकायाश्चोर्ध्वगायाश्चोक्तवद्व्यापारमाह

सर्वज्ञत्वादियोगेऽपि
नियोज्यत्वं मलांशतः ।
प्रमार्ष्टि तद् यया सास्य
मोचिका तत्पदं च यत् ॥१७२
मोचकस्तत्क्रियाकृच्च
ययेशानं करोति तम् ।
सोर्ध्वगा तत्पदं चेति
तदीशश्चोर्ध्वगापतिः ॥१७३॥

विद्येशाद्यधिकारभाजां सर्वज्ञत्वादिगुणयोगेऽपि मलांशावशेषतः प्रेर्यत्वं यदस्ति तद्यया शक्त्यात्मनो निवर्तयति सास्य भगवतो मोचिकाख्या शक्तिस्तस्याश्च यत्स्थानं तत्कृत्यकारी च परमेश्वरः, तदेतत् सर्वं मोचिकाख्यया व्यपदेश्यं यया कृतानुग्रहमीशानं संपादयति सा शक्तिरूर्ध्वगाख्या, तच्च स्थानमूर्ध्वगाख्यं, तदधिष्ठाता चेश्वर ऊर्ध्वगाधिपतिरित्युक्तः ॥१७३॥

येऽपि तत्पदमापन्नाः
शैवसाधनयोगतः ।
ते तत्स्थित्यन्तमाह्लादं
प्राप्य यान्ति परं पदम् ॥१७४
न च सृष्ट्यादि कुर्वन्ति
स्वार्थनिष्ठा हि ते यतः ।

तत्तद्विधोपदेशरूपेण ज्ञानाख्येन वक्ष्यमाणानेकविधभुवनयोजनात्मकेन दीक्षाख्येन शैवेन पारमेश्वरेण साधनेनोपायेन युक्तत्वात् येऽणवस्तत्पदावाप्तिभाजस्तत्स्थितिपर्यन्तं निरतिशयानन्दात्मकं भोगं प्राप्य परं पदं यान्ति शिवसमानाः संपद्यन्ते । न च परमेश्वरवत्सृष्टिस्थित्यादि कृत्यं विदधति यतः स्वार्थे परे निर्वाणावाप्तिलक्षणे निष्ठा विश्रान्तिर्येषां त एवंविधाः । ततः परं प्राप्यस्यान्यस्य च वस्तुनोऽसंभवात् प्रेर्यतापगमाच्च सृष्टिस्थित्यादिकृत्यं न ते कुर्वन्तीति यावत् ॥

उपसंहरन्नाह

इति सादाशिवं तत्त्वं
व्याख्यातं लेशतस्तव ॥१७५॥

लेशतः स्वल्पया मात्रया, तवेति प्रष्टुर्भरद्वाजमुनेः ॥ १७५ ॥

'ईशानंतीत्य शान्तान्तं तत्त्वं सादाशिवं स्मृतम् ।

इत्युक्त्या तच्छक्तितत्त्वमपि तदन्तर्भूतमेवेति वक्तुमतिदिशति

शक्तावप्येवमित्येष
सकलः कृत्ययोगतः ।
कृत्यं तदादिविषयं
निष्कलोऽन्यत्र सर्वदा ॥१७६॥

शक्तिरप्येवं व्यापिकैव ज्ञेया, इत्येवमुक्तया रीत्या एष सदाशिवनाथः कृत्ययोगात् स्थित्यादिव्यापारवशात्सकलः । सह कलाभिर्ब्रह्मपञ्चकसंबन्धिनीभिरष्टत्रिंशत्संख्याभिः तारा सुतारा तरणीत्यादिभिरारब्धमूर्तिकः । यथोक्तं प्राक्

'तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः ।
ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम् ॥'

इति । तच्च कृत्यं तदादिविषयमिति, तदादिर्वि-

षयो यस्य प्रथमतस्तदिच्छयैव पञ्चविधकृत्य-निष्पत्तिरित्यर्थः । अन्यत्रेति स्थित्याद्यप्रवृत्तौ तदुपरमे वा सर्वकालं निष्कल एव परमेश्वरः कार्यार्थं कलाकल्पितमूर्तित्वात् ॥ १७६ ॥

भूमिप्राधानिकग्रन्थि-
विद्याबिन्दुकलादिषु ।
गुणकारा दशाद्याः स्यु-
र्नादकोटेरधो मुने ॥ १७७ ॥

भूमिश्च पृथिवी, प्राधानिकं च प्रकृतितत्त्वं, ग्रन्थिश्च माया, तेषु भूमिप्रधानग्रन्थितत्त्वेषु, विद्यायां च शुद्धविद्यायां बिन्दुनादकलानवके च इत्येवमत्र गुणकारा गुणबन्धनस्थानानि स्युः सन्तीत्यर्थः । तत्र पार्थिवप्राकृतमायीयतत्त्वत्रये गुणात्मिकाः सत्त्वरजस्तमोबहुलाः काराः पाशाः सन्ति, सत्त्वादिगुणत्रयमत्र पाशतया स्थितमित्यर्थः । सत्त्वस्य रजस्तमोपेक्षया प्रकाशत्वेनोत्कर्षे सत्यपि रजस्तमोभ्यामन्यत्वेन विषयत्वासंभवात् पाशत्वसिद्धेः । तथा चोक्तं सिद्धगुरुणा

'सत्त्वगुणावच्छिन्नो भविनां भोगो मलोऽशुचिर्बन्धः ।
पतिभावानलदाह्यः पुंसां चेतोगुणप्रभवः ॥'

इति । विद्यायां बिन्दुनादकलानवके च गुणानां सर्वज्ञतातृप्त्यनादिबोधादीनां या निरतिशयस्य महत्तमस्यालोकस्य कर्त्री मध्यमा कला रोचिकाख्या तदधोवर्ति च नादकलाद्वयं बिन्दुकलाचतुष्कं च, शुद्धविद्या माया अव्यक्तं पृथिवी च काराः प्रतिबन्धकत्वेन स्थिताः । अत एवाह 'दशाद्याः स्युर्नादकोटेरधः' इति नादस्य या कोटिरूर्ध्वगाख्यायाः कलायाः पर्यन्तस्तदधो दशैताः प्रोक्तवन्नादबिन्दुकलानवकं शुद्धविद्यातत्त्वं चेत्येतद्दशकं निरतिशयसर्वज्ञत्वतृप्त्यादिपारमेश्वरगुणप्रतिबन्धकस्थानत्वात् आद्या इति मुख्याः कारा बन्धनभुवः । अन्ये तु भूमिः प्राधानिको ग्रन्थिरित्यसमस्तपाठाभिप्रायेणैवं व्याचक्षते । यदुत गुणानां सत्त्वरजस्तमसामशुद्धानां प्राधानिकस्तावत्पाशग्रन्थिरिव ग्रन्थिभूमिरिति मुख्यव्याप्तिस्थानं विद्यायां बिन्दुनादकलानवके चेत्येवं दशस्वाद्येषु स्थानेषु । अन्ये तु शुद्धास्ते सत्त्वादयस्तत्तद्भुवनं निर्वर्त्य

तत्तत्कृत्योपयोगिनः संभवन्ति । यथोक्तमागमान्तरे

'पार्थिवप्राकृताण्डाभ्यामूर्ध्वमण्डद्वये परे ।
शुद्धाः सत्त्वादयः सन्ति बिन्दुनादकलासु च ॥'

इति । अत्र च शुद्धत्वादेव कारात्वमुपपन्नमिति न चोद्यं, परकैवल्यप्रतिबन्धहेतुत्वेन तथाविधानामपि तेषां पाशत्वानपगमात् । उक्तं च

'समनान्तं वरारोहे पाशजालमनन्तकम् ।'

इति ॥ १७७ ॥

इदानीं प्रागुक्तानां गहनेशादीनां कियदास्पदमिति प्राक् यन्नोक्तं तद्वक्तुमाह

ऊर्ध्वं कलाया विद्याधः
श्रूयन्ते गहनाधिपाः ।
तदन्तरालमेताव-
दिति धीजात्र लक्षणा ॥१७८॥

विद्याशब्देनात्र माया । तदुक्तं श्रीमत्पौष्करे

'..............माया विद्याऽपरा स्मृता ।'

इति । अस्या अधः कलायाश्चोर्ध्वे गहनेशादयो रुद्राः शास्त्रेषु श्रूयन्ते । तत्र तयोर्मायाकलयोरेतावत्प्रमाणमन्तरालमिति बुद्धिजैवात्र लक्षणा मानं परिच्छिनत्ति, नत्वत्र प्रमाणं परमुच्यते मायातत्त्वस्यानन्तत्वश्रुतेः । तथा चोक्तं तंत्रभवद्बृहस्पतिपादैः

'अपि सर्वसिद्धवाचः क्षीयेरन्दीर्घकालमुद्गीर्णाः ।
मायायामानन्त्यान्नोच्येत स्रोतसां संख्या ॥'

इति ॥ १७८ ॥

उपसंहर्तुमाह

द्वयोरप्यध्वनोरेवं
क्रमप्रसवयोगिनोः ।
विलयः प्रातिलोम्येन
शक्तितत्त्वद्वयावधिः ॥१७९॥

एवमित्युक्तेन प्रकारेण क्रमिको यः प्रसवः सर्गस्तद्योगिनोर्द्वयोरपि शुद्धाशुद्धयोरध्वनोः सर्गविपर्ययेण संहारक्रमेण विलयः । यत एव यस्य प्रसवस्तस्यैव तत्रान्तर्भाव इत्यर्थः । शक्तितत्त्वद्वयावधिरिति, शुद्धस्य तावत्परशक्त्यन्तः, अशुद्धस्य मायाशक्त्यन्तः ॥ १७९ ॥

अत्यर्थं संक्षेपेण सूचितं संहारक्रमं विशेष-जिज्ञासुर्मुनिः प्रश्नयति

व्यस्तस्याथ समस्तस्य
विलयः स कथं कियान्।
तत्त्वमार्गस्य भगवन्
ब्रूहि सर्वार्थदर्श्यसि ॥१८०॥

यतः सर्वगतार्थदर्शित्वं त्वयि भगवन् ततोऽस्माकमादिश कथं केन क्रमेण कियत्कालीनश्च व्यस्तस्य प्राधानिकादेः समस्तस्य शक्तितत्त्वान्तस्य तत्त्वाध्वनो विलय उपसंहार इति प्रश्नार्थः ॥ १८० ॥

अथात्रोत्तरं

महास्वापे समस्तस्य
व्यस्तस्यावान्तरो लयः ।
सर्गोऽप्येवं स्थितेः कालः
कथ्यमानोऽवधार्यताम् ॥१८१॥

अनवरतमनन्तपुरुषोपभोगसाधनतनुकरण-

भुवनादिजननापचितशक्तेर्मायातत्त्वस्य पुनस्तत्कार्यनिवर्तनक्षमविचित्रशक्त्युत्तेजनार्थं भविनां भवभ्रमणखिन्नानां वा विश्रान्त्यै व्यस्तस्य प्राधानिकादेरध्वनो विलयः स्वेच्छापरिगृहीतसदाशिवादिसकलरूपोपसंहृतिलक्षणे महास्वापे समस्तस्याप्यध्वनः प्रतिसंचरः । यथा यादृशश्चासौ तथाग्रे स्पष्टयिष्यति । सर्गोऽप्येवमिति व्यस्तसमस्तत्वेन । तथाहि परापरविद्येश्वराद्यनेकाधिकारिक्तत्वेन व्यस्तः, परमेश्वरेच्छाप्रेरितानन्तादिरूपतया तु समस्तः । तदित्थं व्यस्तसमस्तस्य चाध्वनः कथं विलय इति प्रश्नितं यत् तदियता प्रत्युक्तम् । इदानीं कियानिति कियत्कालीनः स विलय इति प्रश्नस्योत्तरं 'स्थितेः काल' इत्यादिना स्थितिपूर्वकत्वाद्विलयस्य स्थितेस्तावत्कालोऽभिधीयमानः श्रूयताम् ॥ १८१ ॥

कोऽसावित्याह

चतुर्युगसहस्रान्त-
महर्ब्रह्माण्डजन्मनः ।

निशा तावत्यहोरात्र-
मानेनाब्दपरार्धके ॥ १८२ ॥
विलयो व्युत्क्रमेणैष
प्रकृत्यादि निवार्यते ।

कृतादियुगचतुष्टयसहस्रान्तमानकं कनकाण्डजस्य ब्रह्मणः संबन्धि दिनं तावत्येव च रात्रिरनेनाहोरात्रमानेन षष्ट्यधिकशतत्रयसंख्यातेऽब्दे एकदशशतसहस्रगणनया परार्धसंख्या यदाब्दानामुत्पद्यते तदा व्यस्तस्य प्राधानिकस्याध्वनो विलयः । एष च व्युत्क्रमेणेति, सृष्टिक्रमवैपरीत्येन पश्चाद्व्यस्तस्याध्वनः सर्गो भूतसंहारस्तु पूर्वमिति वैपरीत्यं तदा च प्रकृत्यादि प्रधानादि यत्सर्गस्योपादानकारणं तत् निवार्यते तत्तदधिकृतैरुपसंहृतव्यापारः क्रियते ॥ १८२ ॥

अथ कथं तदधिकृतास्तदानीमासत इत्याह

तदा रुद्रशतं वीर-
श्रीकण्ठौ च प्रधानपाः ॥१८३॥

शक्त्याक्रम्य जगत्सूक्ष्मं
सूक्ष्मदेहांश्च चिद्वतः ।
प्रकृतिस्थाशयान् कालं
तत्स्वापान्तमुपासते ॥१८४॥

तस्मिंश्च काले शतरुद्राः श्रीकण्ठवीरभद्रौ च क्रोधेशचण्डसंवर्तादयश्च प्रधानाधिकृताः प्रकृतिस्वापावसानं यावत्स्वाधिष्ठेयं जगत् तदानीं शक्तिरूपतयावस्थानात् सूक्ष्मं प्रकृतिस्थितकर्माशयान् क्षित्यादिकलान्ततत्त्वारब्धसूक्ष्मदेहांश्चिद्वतश्चाणून् स्वशक्त्याधिष्ठाय तिष्ठन्ति ॥ १८४ ॥

तदनन्तरम्

शिवेष्टमन्त्रभृन्नुन्न-
मण्डलाधिपतीरिताः ।
काले जगत्समुत्पाद्य
स्वाधिकारं प्रकुर्वते ॥ १८५ ॥

पुनरवान्तरसर्गप्रारम्भे परमेश्वरेच्छाचोदितानन्तादिविद्येश्वरप्रेरितैर्मण्डलाधिपतिसंज्ञितै-

रधिकारिरुद्रैः प्रवर्तितास्ते तस्मिन् काले जगन्निर्माय यथास्वमधिकारं विदधति ॥१८५॥

अत्र प्रकृतिस्थाशयत्वश्रुतेर्मुनिः संदिहानः प्रश्नयति

कर्म धर्मादिकं तच्च
गुणत्वेन मतौ स्थितम् ।
गुणिनो न गुणोऽपैति
प्रकृतावुच्यते कथम् ॥१८६॥

धर्माधर्मरूपं यत्कर्म तद्बुद्धेर्गुणत्वेन स्थितमित्युक्तम् ।

'भावा बुद्धिगुणा धर्मज्ञानवैराग्यभूतयः ।'

इत्यादिना । नहि गुणिनः सकाशाद्गुणस्यापगमो दृष्टः, न हि पटाच्छौक्ल्यं शर्करादेर्माधुर्यं वा पृथक्कर्तुं शक्यम् । ततश्च प्रकृतिस्थाशयत्वश्रुतिः कथमिति प्रश्नार्थः ॥ १८६ ॥

सिद्धान्तस्तु

सत्यं बुद्धिगुणः कर्म
नापैति गुणिनो गुणः ।

देहाक्षफलभूमीनां
तात्स्थ्यात् तत्रोपचर्यते ॥१८७॥

भवत्येव बुद्धिगुणत्वं आगुक्तरीत्या धर्माधर्मरूपस्य कर्मणः, गुणिनश्च सकाशान्न गुणस्य व्यपगमः, तत्र तु प्रकृतौ तत्कर्म स्थितमित्युपचर्यते । कस्मादुपचारबीजादित्याह, देहाक्षफलभूमीनां तात्स्थ्यात् । यतः प्रकृतिस्था एव भोक्तॄणां शरीरेन्द्रियार्थभोगभूमयः तस्मात् कर्मापि तत्स्थत्वेनोक्तम् । बुद्धिस्थत्वेऽपि कर्माशयस्य बुद्धेस्तत्स्थत्वात् प्रकृतिस्थाशयत्वमात्मनामुक्तमित्यविरोधः ॥ १८७ ॥

दृश्यन्ते च तात्स्थ्यादेरुपचारबीजादनेकविधाः शब्दानामौपचारिक्यः प्रवृत्तयः । तथाहि

आधारे कारणे कार्ये
समीपे चोपकारके ।
धर्माद्यनुकृतौ चेति
लक्षणां सूरयो जगुः ॥१८८॥

मुख्यार्थानुगमानुपपत्तेर्गौणार्थप्रतीतिकारिणीं लक्षणां सूरयस्तद्विदो जगुरूचुः । कुत्र कुत्रे

त्याह आधार इत्यादि । तत्र तावदाधारे यथा 'मञ्चाः क्रोशन्ति' इति । अत्र हि मञ्चानामधिकरणभूतानामाचैतन्याद्रोदनलक्षणेन क्रोशनार्थेनाननुगमादानर्थक्यात् तत्स्थानां बालानां संबन्धि यत्क्रोशनं तत्तेषु तात्स्थ्यात्मकलक्षणयोक्तम् । कारणे तु लक्षणा यथा—'शालीन् वृष्टो देव' इति । अत्र हि मुख्यया वृत्त्या शालिवर्षणस्यार्थोऽनन्वित इति लक्षणया कालोचितायां वृष्टौ शालिकारणभूतायां प्रतिबन्धवैकल्ययोरसंभावनात् संपन्नमेव शालिलक्षणं कार्यमुपचर्यते । अथवा 'आयुर्घृतम्' इति आयुष्कारणे घृते आयुषस्तत्कार्यस्योपचारः । एवं कार्येऽपि लक्षणा संभवति यथा—'ऊर्णा प्रावरणाः' केचित् अपरे 'तूलं वासाः' इति । अत्र किल सूत्रभावं विना भाविना कम्बलपटादिभावेनापरिणतयोरूर्णातूलयोर्मुख्यया वृत्त्या प्रावरणत्वमसंभावितं तत्कार्यस्य कम्बलपटात्मन एव तदुपपत्तेः । ततश्च कम्बले पटादौ च तयोः कारणभूतयोरूर्णाकार्पासयोरुपचारः कृतः । समीपार्थलक्षणा यथा—'गङ्गायां घोषः'

इति । अत्र हि मुख्यया वृत्त्या प्रवहज्जलरूपं स्रोतः गुणवृत्त्या वा तद्विशेषं यदि किंचित् गङ्गाशब्दः कथयेत् तदस्यासंभाव्यैव ग्रामाधिकरणतेति सामर्थ्यात् तत्सामीप्यलक्षणत्वेन तद्व्यवतिष्ठते । उपकारकेऽपि लक्षणा दृश्यते यथा—'भिक्षा वासयन्ति', 'कारीषोऽध्यापयति' इति । अत्र किल न भिक्षा तत्प्रावरणाञ्चलं करेण गृहीत्वा गमननिषेधं कुर्वन्ति, नापि सर्वथास्मात् स्थानान्न गन्तव्यमिति प्रणयवचनैरवस्थापयन्ति, अपि तु प्रचुरान्नव्यञ्जनवत्यस्तृप्तिहेतुत्वात् निवसनक्रियायामुपकारकत्वेन संभाव्यमानाः प्रयोजकत्वेनोपचर्यन्ते । एवं च न कारीषोऽङ्ग पुत्राधीष्वेति ब्रुवन् माणवकमध्यापयति, नापि तच्छरीरमनुप्रविश्य भूतवेतालादिभिरिवैनं पाठयति, किं तर्हि शीतापनुत्तिहेतुतयाध्ययनविध्युपकारकत्वेनानुकूल्यं भजंस्तत्प्रयोजकत्वेनोपचरितः । किं च धर्माद्यनुकृताविति आदिग्रहणादाकारानुकृतौ जात्यनुकृतौ वा । तत्र धर्मानुकृतौ यथा—'सिंहो माणवकः', 'गौर्वाहीकः' इति । अत्र किल लक्षणया सिं-

हृधर्माणां शौर्यादीनामनुकृत्यर्थं माणवके सामानाधिकरण्येन सिंहशब्दः प्रवृत्तः, मुख्यया वृत्त्या तस्य सिंहत्वस्यासंभवात्। वाहकेऽपि पुंसि पृष्ठवहनत्वासंभवात् तिष्ठद्भक्षणगच्छत्तृणादनादिबलीवर्दगतधर्मानुकरणाय गोशब्दः सामानाधिकरण्येनोपचरितवृत्तिरेव प्रवृत्तः, मुख्यया वृत्त्या तथानन्वयात्। एवमाकारानुकृतौ यथा—सूच्यभेद्यैस्तमोभिरिति। अत्र हि तमसोऽमूर्तत्वात्सूचिभेद्यत्वं मुख्यवृत्त्या न संगतमतो लक्षणयातिनिबिडत्वं वक्तुमाकृतिः सूचिभेद्यत्वेनानुकृता। एवं नाम घनानि तमांसि यद्वस्त्रादिवत् सूच्यादिना भेदमप्येषां वक्तुं शक्यमित्यर्थः ॥ १८८ ॥

तदियता प्रासङ्गिकमुपचारबीजमनेकाकारमुदाहृत्य प्रकृतमुपसंहारक्रममनुसरन्नाह

एवं गुणादिसर्गाणां
परार्धे गुणकारणम्।
कला लेढि कलां माया
स्वाधिकारपराङ्मुखी ॥१८९॥

तन्निवृत्तौ निवर्तन्ते
देवास्तदधिकारिणः ।
सर्गस्थित्यादिको यस्मा-
दधिकारस्तदाश्रयः ॥ १९० ॥

गुणादिसर्गाणां प्रागुक्तनयेन परार्धसंज्ञके कालेऽप्यतीते गुणकारणमव्यक्ताख्यं कला स्वात्मन्युपसंहरति, तामपि कलां स्वस्मादधिकारात् पराङ्मुखी स्वव्यापारोपसंहारेच्छुर्माया स्वात्मन्येवोपसंहरति । तस्य च मायाधिकारस्य निवृत्तौ तदधिकृताः सर्वे निवर्तन्ते विरतव्यापारा आसते, यस्मात्तेषां सर्गस्थित्यादिरूपोऽधिकारः सर्वो मायाश्रयः, तद्विरतौ च कथं तेषां न विरामः स्यात् ॥ १९० ॥

इत्थमशुद्धेऽध्वनि प्रतिसञ्चर उक्तः इदानीं शुद्धाध्वनि वक्तुमाह

एवं मन्त्रेशमुख्येषु
विशत्स्वभिमतं पदम् ।
विद्यामत्ति सदातत्त्वं
तद्बिन्दुर्बैन्दवं ध्वनिः ॥ १९१ ॥

नादमत्ति परा शक्तिः
शक्तिमीष्टे स्वयं हरः ।

अनेनैव क्रमेण मन्त्रेश्वरप्रधानेषु मन्त्रमहेश्वरेष्वनन्तादिषु निवर्तिताधिकारत्वात् परकैवल्यप्रेप्सुषु सत्सु विद्यातत्त्वं सदाशिवतत्त्वे समुपसंहृतवैभवं भवति । तच्च बैन्दवे, बैन्दवं नादात्मनि, नादोऽपि परस्यां शक्तौ, तां तु शक्तिं साक्षात्परमेश्वरः स्वात्मन्युपसंहरति कलाप्रसवां न करोति ॥

एवं च कृते सति परमेश्वरः

भविनां विश्रमायैवं
मायायाश्च परः शिवः ॥१९२॥
आकलय्य स्वदृक्शक्त्या
स्वापं सृष्ट्यै प्रवर्तते ।

निजया ज्ञानशक्त्या भवभ्रमणखिन्नानां भविनां यथोचितभोगोपयोगितनुकरणभुवनाद्यनेककार्यप्रसवादपचितशक्तेश्च मायाख्यस्योपादानकारणस्य विश्रमाय स्वापमव्यापृतत्वम् । इयता कालेन एते भविनो विश्राम्यन्ति, उपचितसामर्थ्यं च पुनः सर्गक्षमं मायाख्यं कारणं

संजायत इत्येवमाकलय्य परमेश्वरः स्रष्ट्यर्थं प्राग्वत्प्रवर्तते ॥

यथा चैतान्युक्तानि स्वस्मिन् स्वस्मिन् कारणे विलीयन्ते एवमन्यदपीत्याह

एवं तत्त्वानि भावाश्च
भुवनानि वपूंषि च ॥ १९३ ॥
शुद्धाशुद्धाध्वनोर्विप्र
व्याख्यातानि समासतः ।

अनेनैव क्रमेणान्यदपि तत्त्वभावभुवनादि सितासिताध्ववर्ति यत्किंचित्तस्मिंस्तस्मिन् कारणे प्रलीनं संक्षेपतो व्याख्यातं ज्ञेयम् ॥

अत्र मुनिः प्रश्नयति

विद्या पञ्चाणुदेहाश्च
बिन्दुर्नादोऽथ कारणम् ॥ १९४ ॥
पञ्चस्कन्धः परो मार्गः
क्व भावाः प्रत्ययाः स्थिताः ।

शुद्धाशुद्धयोरध्वनोस्तत्त्वभावभुवनानां संक्षेपादेवंविधः स्वस्मिन्कारणे प्रतिसंचर इति

यद्भगवता अस्माकमादिष्टं तत्र विद्यासदाशिवबिन्दुनादपरशक्तिरूपे शुद्धेऽध्वनि भावाः प्रत्ययाः क्व स्थिता इति प्रश्नार्थः ॥

अथात्र सिद्धान्तः

नादः सूक्ष्मः कला काल-
रागयुग्मे सपूरुषे ॥ १९५ ॥
स्थूलः पञ्चकलो नादः
पञ्चतत्त्वाश्रयो मुने ।
प्रधानादिचतुर्ग्रन्थि-
निधिबिन्दुश्चतुष्कलः ॥१९६॥
गर्वे मनोमुखा देवा
बुद्धौ भावादयः स्थिताः ।
पञ्चमन्त्रतनुर्देवः
स्थितस्तन्मात्रपञ्चके ॥१९७॥
सूक्ष्मभूतेषु मन्त्रेशा
मन्त्राः स्थूलेषु संस्थिताः ।

इदमत्र तात्पर्यम् । पञ्चस्कन्धस्याप्यस्य शुद्धस्याध्वनो व्याप्यत्वेनाशुद्धोऽध्वा व्यवस्थितः । तत्र चोच्यमानवद्विशिष्टव्याप्तेर्बिन्दु-

तत्त्वस्यान्तर्गतत्वेन भावप्रत्ययानामत्रस्थितेर्न कश्चिद्विरोधः। तथाहि सूक्ष्मः परो नादः कलेति कलाव्याप्यत्वादुपचारतः कलाशब्द-सामानाधिकरण्येनोक्तः, यथा निखिलनादबि-न्द्वादिप्रमेयगर्भीकारेण तत्कारणं परनादस्व-रूपमवस्थितमेवं समस्तासिताध्वक्रोडीकारेण कला स्थितेति तद्भावेन तस्योपचारः कृतः। कालयुग्मे नियतिकालात्मके रागयुग्मे च विद्यारागस्वरूपे संपुटे सपूरुष इति पुंस्त-त्वसहिते, एतानि पञ्चतत्त्वान्याश्रयो यस्य स पञ्चतत्त्वाश्रयः पञ्चकलः स्थूलो नादः। अनेनैव च क्रमेण प्रधानगुणमहदहङ्कारलक्षणं यद्ग्रन्थीनां पाशरूपाणां प्रकृतीनां चतुष्टयं तन्निधिरिति तद्गर्भः प्रागुक्तनिवृत्त्यादिकला-चतुष्टयात्मको बिन्दुर्बोद्धव्यः। एतदन्तर्गते गर्वेऽहङ्कारतत्त्वे मनसा सह करणदशकं, बुद्धौ तु धर्माधर्मादयो भावाः, तदुपादानाश्च प्रागुक्ताः प्रत्ययाः स्थिताः। इत्थं च सदाशिव-नाथः पृथिव्यादितन्मात्रपञ्चकाधिष्ठातृसद्योजा-तादिपञ्चमन्त्रतनुस्तन्मात्रपञ्चके स्थितः। सू-क्ष्मेषु सूक्ष्मदेहारम्भकेषु भूतविशेषेषु मन्त्रे-

शानां व्याप्तिः । मन्त्राणां स्थूलेषु पृथिव्यादिष्वित्येवं शुद्धोऽप्यध्वैतत्प्रमेयगर्भीकारेणावस्थित इत्यदोषः ॥

अथ व्याख्यातार्थोपसंहाराय व्याख्येयस्य क्रियापादस्य चोपक्षेपाय श्लोकः

इति यदणुनिरोधि ध्वान्तबीजाद्यदृष्टं
पशुमतसृतदृग्भिः पाशजालं सुभूयः
तदुपशमनिमित्तं वक्ष्यमाणक्रियातो
रुचदविहतशक्तिः शाम्भवी मन्त्रसंपत्

इत्येवमुक्तेन प्रकारेणाणून् पशून् निरुणद्धि अवश्यमिति अणुनिरोधि। ध्वान्तबीजादि मलकर्ममायामहेश्वररोधशक्त्यात्मकम् अनन्तात्मावारकत्वेनानेकशक्तियोगात् सुष्ठु भूयोऽतिशयेन भूयिष्ठं पशुमतेषु अनीश्वरशास्त्रेषु सृता दृग्ज्ञानं येषां तैरदृष्टमनवगतम्, पाशानां संबन्धि बन्धनहेतुत्वाज्जालमिव जालं तस्योपशमनहेतोरभिधास्यमानक्रियया हेतुभूतया देदीप्यमाना अप्रतिहतप्रभवा शिवमन्त्रसमृद्धिः । अयमाशयः—वक्ष्यमाणदीक्षाक्रि-

याक्रमोत्तेजितसहजसामर्थ्यया मन्त्रसमृद्ध्या मलकर्ममायादिपाशोपशान्तिनिमित्ततामेत्याभ्युदयाय भवतीति, यस्मादचिन्त्यानुपममहिम्नां मूलमन्त्राणां विषापहारादाविव मलकर्ममायीयपाशच्छेदने सामर्थ्यमव्याहतम् । तथा चाह सिद्धगुरुः सद्योज्योतिर्मन्त्रतत्त्वकरणीयनिरूपणावसरे

'विषवन्निकृन्तति पशोस्तूर्णं मलकर्मयोनिकार्याणि ।
आराधितस्तु सिद्धीर्यच्छति विविधाश्च साधकेन्द्रेभ्यः ॥'

इति ॥ १९८ ॥

किमप्यनुपयोगि यद्यदपि किंचिदप्रस्तुतं
प्रमेयमधिकृत्य तन्न खलु निष्फलं गर्जितम् ।
अपि त्ववसरोचितप्रकृतवस्तुमीमांसना-
न्मृगेन्द्रविवृताविह स्फुरतु तद्विदामादरः ॥
शाङ्करकण्ठश्रीमद्विद्याकण्ठादनुग्रहं लब्ध्वा ।
नारायणकण्ठ इमां तत्पुत्रो व्यचरयद्वृत्तिम् ॥

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ भुवनाध्वप्रकरणम् ॥

समाप्तश्च विद्यापादः ॥

त्रयोदशं प्रकरणं समाप्तम् ॥

अथ

# श्रीमृगेन्द्रतन्त्रे ।

श्रीभट्टनारायणकण्ठविरचितवृत्त्युपेते ।

## योगपादे ।

### ( प्रथमः पटलः )

प्रभवति यतः सर्वज्ञत्वं यतोऽखिलकर्तृता
प्रसरति तथा कार्ये चासौ परा प्रतिभा यतः ।
निरुपधि परं शान्तं धाम स्मरामि तदीशितुः
स्वयमपि विभोर्वागीश्वर्या गिरां यदगोचरः ॥

अथेदानीं योगपादः प्रारभ्यते । तत्र तावत्

'अस्मात्प्रविततादुन्धात्परसंख्यानिरोधकात् ।
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि ॥'

इति श्रुतेर्दीक्षाया एव निरतिशयकैवल्यावाप्तिहेतुत्वात् तस्याश्च सर्वस्या एव पशुपाशेश्वरस्वरूपनिरूपणोपायभूतेन समस्ताध्वव्याप्तिप्रदर्शकेन मन्त्रमन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात् तदव-

१ 'संस्था' क. ।

बोधको विद्यापादः सपरिच्छदः पशुपाशेश्वरस्वरूपनिरूपणाय प्रथममुक्तः । ततः क्रियापादोऽप्यनेकविधसाङ्गदीक्षाविधिप्रदर्शनायोपदिष्टः । सांप्रतं[1] तु ज्ञानक्रियाक्रमज्ञेनापि साधकपुत्रादिना समाध्याद्यनभ्यासादनात्मविदा सता यथोपदिष्टस्वस्वव्यापारानुष्ठानं संपादयितुं न शक्यमिति प्राणायामाद्यङ्गसहितो योगज्ञप्तये योगपादोपक्रमः[2] । अत्र च प्रक्षीणपाशस्याणोः परमेश्वरस्वरूपावभासनं तात्पर्यमिति तन्त्रवस्तुत्रयेण पशुपाशेश्वरलक्षणेन संबन्धो व्यवस्थापितः । प्रयोजनं च तदुपन्यस्तं ज्ञेयम् । सौत्रोपि संबन्धः 'त्रिपदार्थं चतुष्पादं' इत्युद्देशसूत्रप्रक्रमाल्लब्धः । वाक्यात्मकश्च

'चर्यायोगक्रियापादैर्विनियोगोऽभिधास्यते ।'

इत्यादिभिर्वाक्यैः । प्राकरणिकोऽपि समयिनः पुत्रस्य गृहीताभिषेकयोश्च साधकाचार्ययोरवश्योपयोगि योगप्रकरणमित्युक्तमेतत् । पाटलिकस्त्वनन्तरपादपटलान्ते 'सुरयोगीशजुष्टम्' इत्यनेनोपक्षिप्तः ।

---

१ 'संप्रति' क. । २ 'दप्रक्रमः' क. ।

अथानात्मवतां मत्वा
स्वाधिकारं सुदुष्करम् ।
यतेरन्नात्मवत्तायै[1]
देशिकाद्या जिगीषवः ॥ १ ॥

आत्मा विद्यते येषां ते आत्मवन्तः आत्मारामत्वेन नियुक्तत्वात् साक्षात्कृतात्मस्वरूपाः । नित्ययोगे मतुप् । अनेवंविधानां[2] देशिकपुत्रसमयिसाधकानां निजनिजाधिकारकरणमत्यर्थं दुष्करं बुद्ध्वा ते देशिकप्रभृतय उत्तरोत्तरभूमिकाजयैषिणस्तदर्थं यतेरन् प्रयत्नवन्तः स्युरिति विधौ लिङ् ॥ १ ॥

अथ तावत् किमिदमात्मवत्त्वं नामेत्याह

तदात्मवत्त्वं योगित्वं

युज्यते शिवत्वलक्षणया स्वस्वरूपाभिव्यक्त्यावश्यमिति योगी, तस्य भावो योगित्वमात्मवत्त्वाविनाभावि । अत एव 'युजिर्योगे' इत्यस्य धातोर्योगशब्दो ज्ञेयः न तु 'युज समाधौ' इति, अस्य समाधिरूपस्य तदङ्गत्वेनेष्टत्वात् ॥

---

१ 'वन्तो ये' ख. । २ 'किंचैवंविधानां' क. ।

एतच्च

जिताक्षस्योपपद्यते ।

न ह्य[1]वशीकृतेन्द्रियग्रामस्यान्यदपि कार्यं निर्वहति किं पुनर्योगित्वम् । तथा चाहुः

'इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे[2] यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥'

इति । जितेन्द्रियस्य त्वचिरादेव स्वरूपलाभः । उक्तं च सनकेन

'इन्द्रियाणीन्द्रियार्थांश्च तन्मात्राणि मनस्तथा ।
नियम्य ग[3]तसंकल्पः परमात्मनि लीयते ॥'

इति ॥

कथं तज्जिताक्षत्वं स्यादित्याह

प्राणायामाद्यनुष्ठाना-
ज्जिताक्षत्वं शनैः शनैः ॥ २ ॥

वक्ष्यमाणलक्षणप्राणायामाद्यङ्गसप्तकाभ्यासात् जितेन्द्रियत्वं शनैः क्रमेण भवति । द्वितीयः शनैःशब्दोऽभ्यासविषये, शनैर्वक्ष्यमाणमात्राविवर्धनक्रमेण प्राणायामादयोऽनुष्ठेयाः, यस्मादतिमात्रमभ्यस्यतां वातगुल्मगुदोदावर्तो-

---

१ 'तस्य व' क. । २ 'मी' क. । ३ 'गति' क. ।

र्ध्वश्वासोन्मादस्मृतिमोषादयो योगविघ्नहेतवो दोषा उद्भवेयुः ॥ २ ॥

अथ साङ्गं योगमुपदेष्टुमाह

प्राणायामः प्रत्याहारो
धारणा ध्यानवीक्षणे ।
जपः समाधिरित्यङ्गा-
न्यङ्गी योगोऽष्टमः स्वयम् ॥३॥

प्राणायामादीनि सप्ताङ्गानि योगस्य[1], स तु स्वयमष्टमोऽङ्गित्वेन ज्ञेयः ॥ ३ ॥

अथैषां प्राणायामादीनां लक्षणं वक्ति

प्राणः प्रागुदितो वायु-
रायामोऽस्य प्रखेदनम् ।
प्रेरणाकृष्टिसंरोध-
लक्षणं क्रतुदोषनुत् ॥ ४ ॥

प्राणादिवृत्तिभेदादेकस्यापि वायोः प्राणापानादिपञ्चभेदत्वं तद्वृत्तयश्च विद्यापादे प्रदर्शिताः । तादृग्विधस्य तस्य वायोः खेदनं, स्वातन्त्र्यभावादाधिक्येन बहिःप्रेरणम्, तस्यैव

---

१ 'योगस्तु' क. ।

चान्तस्तथाकर्षणं, संरोधश्च कुम्भीकरणं रेचन-प्रवेशनविरामः, एवंलक्षणं यत् प्राणादीनां प्रखेदनं स प्राणायामः । क्रतुशब्देनेन्द्रियाणि संकल्पो वा तेषां दोषाः विहितानुष्ठान-निषिद्धाचरणकृताः तान्नुदति उपशमयतीति तद्दोषनुत् । उक्तं हि

'दह्यन्ते ध्मायमानानां धातूनां च यथा मलाः ।
प्राणायामैस्तथा दोषाः शाम्यन्तीन्द्रियगोचराः ॥'

इति ॥ ४ ॥

अथ प्रत्याहारस्य लक्षणम्

ततः सुखलवास्वादे
तेषां वृत्तस्य चेतसः ।
प्रत्याहारो विधातव्यः
सर्वतो विनिवर्तनम् ॥ ५ ॥

ततः प्राणायामाभ्यासादनन्तरं प्रत्याहारः कार्यः । किंरूपोऽसावित्याह—तेषामिति, तेषा-मिन्द्रियाणां संबधी वैषयिको यः सुखलव आनन्दलेशस्तदास्वादे वृत्तस्य तत्परस्य चेतसः सर्वेभ्य एवेन्द्रियार्थेभ्यः प्रत्याहरणं प्रत्याहारो विधेयः ॥ ५ ॥

इत्थमनुतिष्ठतः किं स्यादित्याह

तेनेन्द्रियार्थसंसर्ग-
विनिवृत्तेश्चितो मतिः ।
धारणायोग्यतामेति
पदे स्वेच्छाप्रकल्पिते ॥ ६ ॥

तेन प्रत्याहारेण चितश्चित्तस्येन्द्रियार्थसंयोगात् प्रत्याहृतत्वात् या विनिवृत्तिः स्वव्यापारविरतिः तस्या हेतुभूतायाः स्वेच्छाप्रकल्पिते पदे वक्ष्यमाणधारणायोग्यतां मतिरभ्येति । न चात्र मतिर्बुद्धिः अपि तु मननं मतिः संकल्पाख्यश्चेतसो व्यापारः, तस्यैव धारणाश्रवणात् । यदाह पतञ्जलिः 'देशबन्धश्चित्तस्य धारणा' (३।१) इति । तथा 'धारणासु योग्यता मनसः ।' (२।५३) इति ॥ ६ ॥

ध्यानं वक्तुमाह

चिन्ता तद्विषया ध्यानं
तच्चादिष्टं मुहुर्मुहुः ।

धारणानिरुद्धस्य चित्तस्य त्रिनेत्रपञ्चवक्त्रा-

द्याकारविषया या चिन्ता तद्ध्यानम् । तच्चादिष्टमिति

'हेमालिहिमरक्ताभवक्राम्बुजचतुष्टयम् ।'

इत्यादाववसरान्तरेषु मुहुर्मुहुरुक्तम् ॥

अथ समाधेर्लक्षणम्

तदेकतानतामेति
स समाधिर्विधीयते ॥ ७ ॥

तद्ध्यानमेकतानतां ध्येयैकनिर्भासत्वं यदाभ्येति तदा समाधिरिति शास्त्रेषु प्रदिश्यते । तथा चाह पतञ्जलिः ।

'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ।' ( ३।३ )

इति ॥ ७ ॥

जपस्य लक्षणं कथयति

जपस्तद्भाषणं ध्येयसंमुखीकरणं मुने ।

मानसस्यान्तःसंजल्परूपस्योपांशुसंज्ञस्य च स्वसंवेद्यलघुध्वनेर्भाष्यस्य च श्रूयमाणस्य मन्त्रस्य ध्येयसंमुखीकरणायावर्तनं जप इत्युक्तम् ॥

---

१ 'प्रइ' क. ।

ऊहमिदानीं लक्षयितुमाह

ऊहोऽभिवीक्षणं वस्तु-
विकल्पानन्तरोदितः ॥ ८ ॥

'यत्तदूहं मतिः पुंसां भ्रमत्यन्धेव मार्गती ।
तत्कुर्वन्नुच्यते प्राणः' ( १।११।२२ )

इत्यनेन विद्यापादे प्राणाख्यस्य वायोः सौक्ष्म्याच्च लक्ष्यं नुदन् ऊहन् यदुक्तं, यथा च श्रीमत्स्वायम्भुवे

'..................नुदन्नूहः प्रवर्तते ।'

इति । स ऊहोऽभिवीक्षणात्मकस्तत्तद्भूमिकाप्रा[1]प्तितो लब्धे वस्तुन्यसंतोषकृताद्विकल्पात्समनन्तरमुदित उद्भूतो ज्ञेयः ॥ ८ ॥

अथ कस्मिन्नूहोऽसौ कार्ये योगिन उपयोगीत्याह

यदा वेत्ति पदं हेय-
मुपादेयं च तत्स्थितेः ।
तत्पोषकं विपक्षं च
यच्च तत्पोषकं परम् ॥ ९ ॥

---

१ 'कावाप्ति' क. ।
२ मृ. यो.

तस्य ऊहस्य स्थितिरवस्थानं ततो हेतोः क्रमेण । यदेति यस्मादर्थे । यस्मात्कारणात् योगी समुत्पद्यमानयथावस्थितसकलवस्त्वव-भासतया हेयं पदं तस्य च पोषकं तद्विपक्षकं विपक्षपोषकं च वेत्ति । तथोपादेयं तत्पोषकं विपक्षकं विपक्षपोषकं च जानाति, अत एष प्रकृष्टं योगाङ्गम् । यथोक्तं श्रीमन्मालिनी-विजये

'योगाङ्गत्वे समानेऽपि तर्को योगाङ्गमुत्तमम् ।
हेयाद्यालोचनाय…………………… ॥'

इति । श्रीमत्स्वायम्भुवेऽपि

'अनेन लक्षयेद्योगी योगसिद्धिप्रवर्तकम् ।
निरोधकं च यद्वस्तु बहुधा संव्यवस्थितम् ॥'

इति ॥ ९ ॥

इत्थं योगाङ्गान्युक्त्वा फलमेषामभिधातुमाह

एषु व्यस्तसमस्तेषु
कृतयत्नस्य योगिनः ।
विभान्ति शक्तयो विश्वं
व्याप्य भानोरिव त्विषः ॥१०॥

न तमीष्टे नरः कश्चित्
रक्षोदानवमानवाः ।
रोरुचानमतीत्यैतान्
दृक्क्रियाप्राणरोचिषा ॥ ११ ॥

एषु प्राणायामादिष्वङ्गेषु समस्तेष्वसमस्तेषु वा कृताभ्यासस्य योगिनः सर्वाः शक्तयो विवस्वत इव दीप्तयो विश्वं व्याप्य भान्ति भ्राजन्ते, सर्वकार्येष्वयमव्याहतसामर्थ्यः स्यादित्यर्थः । तथा हि नैनमत्युग्रतेजस्त्वाद्देदीप्यमानं सन्तं राक्षसदानवत्रिदशमनुजेभ्यः कश्चिदप्याक्रामति । प्रकृष्टैर्ज्ञानक्रियावीर्यतेजोभिरेतान् दानवादीनतीत्यातिक्रम्य स्थितत्वादिति, रोरुचानमिति[2] विशेषणद्वारेण हेतुः ॥ ११ ॥

अत्र मुनिः प्रश्नयति

निवृत्तेर्मनसो हेतुः
संसर्गात्प्राणखेदनम् ।
निवृत्तिर्धारणादीनां
मूलं सर्वस्य तत्ततः ॥ १२ ॥

१ 'नच तं' क. । २ 'नत्वादिति' ख. ।

विस्तरेण सुरश्रेष्ठ
विप्रकृष्टं[1] च यत्स्थितम्।
यदन्यत्साधनं किंचि-
द्योगसिद्धेश्च कथ्यताम् ॥ १३ ॥

इन्द्रियार्थसंसर्गान्मनसो या निवृत्तिर्विरति-स्तस्याः किल प्राणायामाः कारणत्वेनेष्यन्ते । प्राणादिजयाद्धि मनसो वश्यता भवति । सा च मनस इन्द्रियार्थेभ्यो निवृत्तिर्धारणादीनां हेतुस्ततश्च हेतोस्तत्प्राणखेदनं सर्वस्य धारणा-देर्मूलमिति कृत्वा विस्तरेणोच्यताम्। यच्चान्य-द्योगसिद्धेर्विप्रकृष्टमङ्गाङ्गितया साधनं स्थितं हि-तमितजीर्णाशननिर्बाधस्थाना[2]ध्यासनादि शौ-चादि वा तदपि भगवन्नमरेश्वर अस्मभ्यम-भिधीयतामिति मुनेः प्रश्नः ॥ १२ ॥ १३ ॥

अथात्रोत्तरम्

न शक्यं विस्तराद्वक्तुं
तत्प्रसङ्गभयाद्विधेः ।

---

१ 'विकृष्टमपि तत्' ख. । २ 'नासना' क. ।

प्रश्नस्यावश्यवाच्यत्वा-
त्तथाप्युद्देश उच्यते ॥ १४ ॥

विधिप्रदर्शकत्वेनोपचारात् शास्त्रेऽपि विधिव्यपदेशः । विस्तरेण वक्तव्येऽभिधीयमाने शास्त्रस्यातिविस्तरप्रसङ्गः स्यादिति विस्तरेण तावदभिधेयं वक्तुमयुक्तं, यथायथं विस्तरभीरवो हि श्रोतारः, तथाप्यवश्यवक्तव्यत्वात् प्रश्नस्योद्देशः संक्षिप्तसकलविधिनिरूपणं क्रियते ॥१४॥

तत्रादितस्तदङ्गतया स्थितं शौचं संक्षेपतो वक्तुमाह

मूत्राद्युत्सृज्य विधिव-
देकार्धदशसप्तभिः ।
मृद्भिर्लिङ्गगुदासव्य-
हस्तयुग्मानि शौचयेत् ॥ १५ ॥

द्विर्व्रती त्रिरपः पीत्वा
द्विर्विमृज्याननं स्पृशेत् ।
खबाहुनाभिहृत्कानि
द्विस्त्रिर्वा शौचिताधरः ॥ १६ ॥

विण्मूत्रोत्सर्गं विधिवदिति सामान्यशास्त्रविध्यनतिक्रमेण कृत्वा । यथोक्तं वासिष्ठे

'अवगुण्ठितशिरा भूमिमयाज्ञियैस्तृणैरन्तरितां कृत्वा मूत्रपुरीषे कुर्यात्, उदङ्मुखोऽहनि, नक्तं दक्षिणाभिमुखः ।'

इति । तत एकपञ्चदशसप्तसंख्याभिर्मृत्तिकाभिर्यथासंख्यं शिश्नं च पायुं वामहस्तमुभौ च पाणी शौचयेत् । द्विर्व्रतीति समयिसाधका[2]दीनां चतुर्णामपि चर्यापादे व्रतित्वमव्रतित्वं च वक्ष्यति । तथा चायमव्रतिविषयः शौचविधिः । व्रती तु तदेव द्विगुणमाचरेत् । ततः त्रिरपः पीत्वा इत्याचम्य द्विश्चास्यं परिमृज्य खानीन्द्रियच्छिद्राणि बाहुनाभी हृच्छिरसी च स्पृशेत् । द्वौ वारौ त्रीन् वारान् वाऽधरोष्ठौ च क्षालयेत् ॥ १५ ॥ १६ ॥

तदनन्तरं तु

हितजीर्णाशनस्वस्थ-
स्त्रिकुड्यावेष्टिते गृहे ।
बाधाशून्ये वनादौ वा
स्वासनस्थ उदङ्मुखः ॥ १७ ॥

---

१ 'मज्ञीयैः' क. । २ 'पुत्रका' क. ।

नमस्कृत्य महेशान-
मुमास्कन्दगणाधिपान् ।
ऋजुग्रीवाशिरोवक्षा
नासाग्राहितदृग्द्वयः ॥ १८ ॥
पार्ष्णिभ्यां वृषणौ रक्षन्
दन्तैर्दन्तानसंस्पृशन् ।
विष्टब्धदेहो दन्ताग्रे
जिह्वामादाय सुस्थितः ॥१९॥
रेचयेच्छक्तिपर्यन्तं
पुटेनैकेन मारुतम् ।

हितमपीडाकरं, जीर्णे परिणामप्राप्तौ अशनं यस्य स एवं स्वस्थः, अत एव धातुसाम्यादिना। त्रिभिः कुड्यैः प्राकारैरावृते निःशब्दे गृहे निर्बाधे वा वने गिरिगुहादौ वा सुखावस्थितिहेतुत्वात्, सुष्ठु शोभने चेलाजिनाद्युत्तरे आसने पीठपट्टादौ स्थितः। यद्वा अभ्यासवशात् सुष्ठु स्थैर्यसुखहेतावागमान्तरेषु उपदिष्टलक्षणे पद्मस्वस्तिकार्धचन्द्रादिके योगासने तिष्ठतीति स्वा-

सनस्थः । उत्तरादिङ्मुखः । परमेश्वरं देवीं गुहं गणेशं च नत्वा, सुस्पष्टशिरःकण्ठवक्षाः स्वनासिकाप्रान्तनिहितदृष्टिः, [1]व्यवहितोत्तराधरदन्तपङ्क्तिः, पार्ष्णिभ्यां मुष्कपीडनमुद्घातवशादुत्प्लुतौ [2]वा रक्षन्नकुञ्चितशरीरः सुस्थितो दन्तप्रान्तनिहितजिह्वः सन् यथाशक्ति दक्षिणेन नासापुटेन वायुं शरीरान्तःस्थं नाडीशोधनार्थं रेचयेत् बहिः क्षिपेत् ॥

स रेचकस्तदभ्यासा-
द्वेधविक्षिप्तकर्मसु ॥ २० ॥
क्रमशः शक्ततामेति
विकृष्टविषयेष्वपि ।

उक्तलक्षणस्य रेचकस्याभ्यासात् क्रमेण व्यवहितविषयेष्वपि वेधकर्मसु विक्षिप्तकर्मसु च विशरारुताकरणरूपेषु योगी शक्ततां प्राप्नोति ॥

अथ पूरकलक्षणम्

बाह्येन वायुना मूर्तेः
[3]शक्तिसीमप्रपूरणम् ॥ २१ ॥

---

१ 'विवधितो' ख. । २ 'वारयन्' क. । ३ 'यथाशक्ति' क. ।

पूरकः स तदभ्यासा-
त्सुगुर्वपि विकर्षयेत् ।

बहिष्ठेन मारुतेन यथाशक्ति मूर्तेः प्रकर्षणे पूरणं पूरकः, तस्मिन्नभ्यस्ते सुष्ठु गरिष्ठमपि शिलादि[1] आक्रष्टुं शक्तो भवेत् ॥

कुम्भकं कथयितुमाह

त्यागसंग्रहणे हित्वा
निरोधः कुम्भकः स्मृतः ॥२२॥
रोधशक्तिस्तदभ्यासा-
द्व्यक्तिमेत्यनिवारिता ।

रेचनात्मकं त्यागं पूरणरूपं संग्रहणं त्यक्त्वा, अन्तःस्थस्य वायोर्निरोधात् कुम्भीकृत्यावस्थापनं यत्कुम्भकस्तस्याभ्यासादव्याहतरोधशक्तिरभिमतवस्तुस्तम्भनसामर्थ्यं व्यज्यते ॥

तथास्य चरतो विद्वान्
सोमसूर्येशवर्त्मसु ॥ २३ ॥
तद्धर्मयोग्यतां बुद्ध्वा
योगी संसाधयेन्मतम् ।

---

१ 'वाकर्षणशक्तः' क. ।
२ मू. यो.

तदभ्यासाद्विधेयत्वेनास्य वायोश्चरतः प्रचारज्ञो योगी मध्यवामदक्षिणनाडीचारेषु चिकीर्षितवस्त्वानुगुण्यं निश्चित्य, यथास्मिन्कर्मणि दक्षिणश्चरन् श्रेष्ठोऽमुष्मिन् मध्यम एतस्मिंस्तु सौम्यः प्रशस्तः इत्येवं मत्वा अभीष्टं योगी साधयेत् ॥

तथाहि

पूरकं कुम्भकं वापि
भजेच्चन्द्रपथि स्थिते ॥ २४ ॥
पुष्टिमृत्युजयाद्यर्थं
स्वात्मनोऽन्यस्य रेचकम् ।
अनग्निज्वलने वृक्ष-
शोषणे बीजनाशने ॥ २५ ॥
स्तोभोन्मादविषोद्दीप्ति-
प्रमुखेषु तु रेचकम् ।
ध्यानार्चनजपाद्येषु
देहत्यागे च शाङ्करे ॥ २६ ॥
कुम्भको रेचकश्चेष्टो
दीक्षासंस्थापनेषु च ।

वामनाड्यवस्थिते मरुति कुम्भकपूरकौ स्व-पुष्ट्यर्थमात्मन आप्यायनार्थं मृत्युजयार्थं च कालवञ्चनाय, आदिग्रहणाच्छान्तिकादिसिद्ध्यै च कुर्यात्। परस्य पुष्ट्याद्यर्थं वा वामस्थं रेचकं भजेत्। यदा त्वनग्निज्वलनवृक्षशोषणनिर्बीजीकरणस्तोभोन्मादविषोद्दीपनप्रमुखकार्याणि कर्तुमिष्टानि तदानीं सौरमार्गस्थेन चारेण रेचकं कुर्यात्। स्तोभः खलपस्य विषज्वालादेर्बहुलीकरणम्। शाङ्कर इति सौषुम्नमार्गस्थं[1] विषुवति कर्तव्यतयोक्तं यत्तद्ध्यानार्चनजपादि कार्यं, उत्क्रान्तिर्वा तद्विषये, दीक्षासंस्थापने कुम्भकरेचकाविष्टौ। संस्थापनं प्रतिष्ठानम्॥

अथैषां रेचकादीनामभ्यासाय कालपरिमाणं[2] प्रति नियमं वक्तुमाह

यवीयान् मध्यमो ज्येष्ठः
स तालैर्द्वादशादिभिः ॥ २७॥
तालो द्वादशभिर्जानु-
परिणाहपरिभ्रमैः।

---

१ 'शिवाश्रयसौसुणमार्गस्थवि' क.। २ 'परिणामप्रतिनि' ख.।

हस्तेन जानुमण्डलपरिभ्रमणं यावत्या कालमात्रया क्रियते तावतीभिर्द्वादशभिस्तालाख्यः कालांशो ज्ञेयः । तैश्च तालैर्द्वादशभिः कनिष्ठः प्राणायामः, चतुर्विंशत्या मध्यमः, अष्टाचत्वारिंशता श्रेष्ठः । तथोक्तं श्रीसर्वज्ञानोत्तरे

'तालद्वादशको ज्ञेयः प्राणायामस्तु कन्यसः ।
मध्यश्चतुर्भिर्विंशत्या श्रेष्ठस्तद्द्विगुणो भवेत् ॥'

इति ॥

इत्थं प्रतिनियत[1]प्राणरेचकपूरककुम्भकसमुदायरूपो यः प्राणायामः

सोऽपि ध्यानजपोपेतः
सगर्भोऽन्यस्तदुज्झितः ॥ २८ ॥
यथा सगर्भः स्थैर्याय
मनसो न तथेतरः ।

सोऽप्ययं प्राणायामो ध्यानेन जपेन च युक्तः सगर्भाख्यया ज्ञेयः । यस्तु विनैव ध्यानजपाभ्यां क्रियते स निर्गर्भः । यथा च मनसः स्थैर्यहेतुत्वं सगर्भस्य न तथा निर्गर्भस्य—इति

१ 'नियम' क. ।

सगर्भप्राणायामार्थमभ्यासः कार्यः इति तात्पर्यम् ॥

प्रातर्निशाकृतं पापं
दिनान्ते च दिवाकृतम् ॥ २९ ॥

प्रभाते कृतोऽयं सगर्भः प्राणायामो निशाकृतं पापं हन्ति, दिनान्ते तु कृतः स दिवाकृतं हन्तीत्यग्रस्थेन संबन्धः ॥ २९ ॥

हन्त्यगर्भोऽपि देवानां
प्रचलत्वं प्रधावताम् ।

एवं[1] च न किञ्चिन्निर्गर्भेण प्राणायामेन प्रयोजनम्, अतः किं तेनेत्याह—देवानां मनःसहितानामिन्द्रियाणां विषयेष्वनाद्यविद्यावशात् प्रकर्षेण धावतामेष निर्गर्भः प्राणायामः सातत्येन क्रियमाणः प्रचलत्वं प्रकृष्टवेगवत्त्वं हन्ति इन्द्रियजयकारीत्यर्थः ॥

किं च

स्नातो भवति तीर्थेषु
सर्वक्रतुषु दीक्षितः ॥ ३० ॥

---

1 'एवं चेन्न कश्चित्' ख. ।

पोतः पितॄणां यः शश्व-
त्सगर्भमिममाचरेत् ।

यस्तु नित्ययुक्तत्वेनेमं जपध्यानयुक्तं सगर्भमभ्यस्यति स सर्वतीर्थेषु स्नानस्य समस्ताध्वरेषु दीक्षितस्य च फलं लभते, पितॄणां च संसारोत्तरणे पोतः प्लवो भवति, तत्प्रसादत्तस्तेऽपि भवाब्धि[1]तः समुत्तरन्तीत्यर्थः ॥

सगर्भतामेव वक्तुमाह

ध्यायेदध्वान्तगं [2]देवं
जपेत्तद्वाचकं सदा ॥ ३१ ॥
क्षित्यादीन्यथ तत्त्वानि
तद्रूपा[3]धिकृतानि वा ।

सर्वाधिष्ठातृत्वेन हेतुनाध्वनः पर्यन्तवर्तिनं परमेश्वरं सकलकारणातीतं परमार्थत्वेन ध्यायेत्, तस्य च वाचकं मन्त्रं जपेत्, शब्दार्थरूपाववियुक्तौ प्राणायामसमये कुर्यादित्यर्थः । यदि वा धारणाफलं लिप्सुः पृथिव्यादीनि परमेश्वरस्वरूपाश्रयत्वेन च ध्यायेत् । सकलचिद्-

---

१ 'ब्धि' क. । २ 'कं' क. । ३ 'पाणिकृ' ख. ।

चिद्भावाधिष्ठातृतया भगवतः सर्वदा सर्वत्रा-
वस्थितेः ॥

अथ पृथिव्यादितत्त्वध्याने किं भगवद्भाव-
नयेत्याह

यस्मान्नाचेतनं तत्त्वं
सिद्धमप्युपकारकम् ॥ ३२ ॥
शैवं वपुरिति ध्याये-
दतो यद्यत्समीहितम् ।

यतः किल स्वभावजडं पृथिव्यादिवस्तु-
जातं शिवस्वरूपाधिष्ठानं विना कृतध्यानाभ्या-
सतः सिद्धमपि नोपकारकम्, अतः पारमे-
श्वरमेवैतत्सर्वं वपुरिति ध्यायेत् । अतो यद्य-
त्किमप्यभिप्रेतमचिद्रूपमपि वस्तु ध्यायेत् ॥

यतश्चैवमतः

सिद्धये धारणादीनां
वृत्तीनामनिलस्य च ॥ ३३ ॥
सगर्भं कुम्भकं विद्वा-
नातिष्ठेदविखिन्नधीः ।

धारणादीनां योगाङ्गानां प्राणादिवृत्तीनां च प्रागुक्तानां प्रणयनाद्यर्थानां सिद्ध्यर्थं सगर्भं कुम्भकाभ्यासमनुद्विग्नबुद्धिः सन्नातिष्ठेदाचरेत् ॥

अयमर्कगुणं कालं
कृतचित्तव्यवस्थितिः ॥ ३४ ॥
प्राप्नोति धारणाशब्दं
धारणासिद्धिदानतः ।

अयं सगर्भः कुम्भको द्वादशगुणं कालं चित्तवृत्तिनिरोधेन कृतः सन् धारणाव्यपदेशं लभते । कुत इत्याह—धारणासिद्धिदानतः, धारणासंबन्धिनीः सिद्धीस्तथाभ्यस्यमानो ददाति ॥

स्थित्यर्थो धारणाशब्दः
स्थानार्थोऽप्युपचारतः ॥३५॥
स्थानं प्राथमिकस्येमा-
न्यवन्यादीनि नेतरत् ।

स्थितिरवस्थानं नियतदेशे हृत्कण्ठादौ चेतसो धारणाशब्देनोच्यते । उपचारात्तु तिष्ठत्यस्मिंस्तथाविधया धारणयेति स्थानमधिकरणरूपमनेनाभिधीयते । प्राथमिकस्य प्रथमा-

भ्यासंप्रवृत्तस्यारुरुक्षोः पृथिव्यादीनि पञ्चतत्त्वानि अभ्यासस्य स्थानं, न त्वन्यदप्रत्यक्षं महदहङ्कारादितत्त्वजातम् । उपलभ्यमानपृथिव्यादितत्त्वाभ्यासपूर्वस्तु तत्तदभ्यासः सुगम एवेति सर्वयोगशास्त्रेषूपदेशक्रमः ॥

अथैषामेव रूपाकृतिप्रयोजनलाञ्छनान्यभिधत्ते

तानि हेमहिमज्योतिः-
कृष्णस्वच्छानि रूपतः ॥ ३६ ॥
वेद्यर्धमण्डलत्र्यस्र-
वृत्तपद्माकृतीनि तु ।
स्थैर्याप्यायनविश्लोष-
प्रेरणाशून्यताप्तये ॥ ३७ ॥
भवन्ति वज्रकज्वाला-
बिन्दुशून्यान्वितानि तु ।

तानि पृथिव्यादीनि पञ्च तत्त्वानि यथासंख्यं रूपतः पीतसितोज्ज्वलकृष्णस्वच्छानि, संस्थानाच्चतुरस्रार्धेन्दुत्रिकोणपरिवर्तुलपद्माकाराणि, क्रमाच्च वज्रेण वारिजेन ज्वालया बि-

न्दुना शून्येन च लाञ्छितानि स्थैर्याद्यर्थं भवन्ति, तत्साधकानि संपद्यन्त इत्यर्थः ॥

तानि च

बाधकान्यनुवर्तीनि
मध्यस्थान्यवगत्य च ॥३८॥
योगी व्यस्तसमस्तानि
बिभृयादिष्टसिद्धये ।

पृथिव्यादीन्येव मित्रामित्रमध्यस्थत्वेन व्यस्तसमस्तानि बुद्ध्वा तेषु कार्येष्विष्टसिद्ध्यर्थं योगी धारयेत् ॥

अथ धारणारूपतत्फलजिज्ञासया मुनिः प्रश्नयति

क्व देशे धारणारूपं
चिन्तनीयं विपश्चिता ॥३९॥
किंच व्यस्तसमस्तानां
फलं ब्रूहि सुरेश्वर ।

धारणासु यदेतद्रूपं हेमहिमज्योतिरित्यादिनोपदिष्टं तत् कस्मिन् स्थाने तद्विदा चिन्त्यम् ।

आसां च धारणानां व्यस्तानां समस्तानां फलं सुराधिनाथ अस्मभ्यमादिशेति प्रश्नः ॥

अथात्र प्रतिवचनम् ।

हृदि चेतसि विक्षिप्ते
धारयेत्क्षितिमर्थवित् ॥ ४० ॥
जलं पिपासितः कण्ठे
मन्देऽग्नौ जठरेऽनलम् ।
प्राणादिवृत्तिसिद्ध्यर्थं
हृत्कण्ठादिषु मारुतम् ॥ ४१ ॥
विषाद्यभिभवे व्योम
तेषु यन्त्रोपयोगवत् ।

चेतसो यदा विक्षिप्तता स्यात् तत्प्रयोजनज्ञो[1] योगी हृत्प्रदेशे पार्थिवीं धारणां स्थैर्यकारित्वेनोक्तां धारयेत् । दुर्वारया तु तृषा यदा बाधितः स्यात्तदा वारुणीं धारणां कण्ठे बिभृयात्, आप्यायनार्थं तस्याः प्रोक्तत्वात् । जाठरस्याग्नेर्मान्द्ये सति तत्संधुक्षणार्थं जठरे प्रागुक्तामाग्नेयीं बध्नीयात् । प्राणादिवृत्तीनां प्राग-

१ 'तदा प्र' क. ।

भिहितानां प्रणयनाद्यानां सिद्ध्यर्थं स्वाधीनत्वे सति तत्तत्फलसंपादकत्वाय पूर्वोक्तेष्वेव हृत्कण्ठादिषु स्थानेषु वायवीं धारयेत् । विषोन्मादमदव्याध्याद्यभिभूयमानस्तु तेष्वेव हृदयादिषु मध्यादन्यतमे स्थाने व्योमधारणां बध्नीयात् । यत्र वा विषाद्युपघातवत्यङ्गे तथा धारणाद्युपयोगवत् सप्रयोजनं तस्मिन् धारयेत् ॥

इदानीं परस्परमेषां पृथिव्यादीनां मध्यस्थारातिमित्रत्वं विवेचयन् सर्वसाधारणत्वमाकाशस्य तावत्प्रथममभिधातुमाह

खं समस्तेषु भूतेषु
वारिवायू[1] शिखिक्षिती ॥ ४२ ॥
वार्यग्नी भूमिपवनौ
वारिक्ष्मे अनलानिलौ ।
मध्यस्थारातिमित्राणि
चतुष्के युग्मयुग्मशः ॥ ४३ ॥
परिज्ञायेति मतिमान्
योजयेदिष्टसिद्धये ।

---

१ 'वायुवारी' क. ।

आकाशस्तावत् व्यापकत्वादन्तर्वर्तित्वेन सर्वेषामवकाशदायित्वेन मित्रमेषां ज्ञेयम् । वारिवायू शिखिक्षिती इत्यादेश्चतुष्कत्रयादेकैकस्मिंश्चतुष्के यथाक्रमं युग्मयुग्मश इति द्वयं द्वयं क्रमात् मध्यस्थारातिमित्राण्येतानि बोद्धव्यानि । तथाहि वारिवायू शिखिक्षिती इत्यत्राद्ये चतुष्के जलपवनयोः क्षित्यग्न्योश्च परस्परं न मित्रत्वं न शत्रुत्वमिति[1] मध्यस्थत्वमेषां बोद्धव्यम् । वाय्वग्नी भूमिपवनावित्यत्रापि मध्यमचतुष्के बाध्यबाधकभावेन परस्परमेषां चतुर्णामवस्थितेररातित्वं शत्रुता । वारिक्ष्मे अनलानिलावित्यत्र तृतीयस्मिंश्चतुष्के भूमिजलयोर्वाय्वग्न्योश्चान्योन्यं पोषकत्वान्मित्रत्वम् , इत्येवं परिज्ञाय बुद्ध्वा प्राज्ञो योगी तथा तथा साधकत्वेन बाधकत्वेन वा यथावसरमिष्टसिद्ध्यर्थमेतान् प्रयुञ्जीत ॥

अथ विद्यापादान्तर्गतप्रत्ययादिविचारप्रकरणे प्राणादिवायूनां स्वरूपोक्तौ

'.........स्थानं यद्यस्य धारणे ।
जयः फलं वाच्यशेषं पत्या स्कन्धान्तरेरितम्'

---

1 'शत्रुभावः' क. ।

इति यदुक्तं ततः प्राणादिवृत्तीनां स्थानं सधारणं[1] फलं च ज्ञातुं मुनिः प्रश्नयति

कानि प्राणादिवृत्तीनां
स्थानान्यस्मिन् शरीरके ॥४४॥
जितासु तासु किंच[2] स्या-
दिति ब्रूहि सुरोत्तम ।

प्राणापानादिवृत्तीनां[3] प्रणयनापनयनाद्यानां कानि स्थानानि येषु तज्जयः कार्यः । तासु च प्राणादिवृत्तिषु जितासु अस्मिन् शरीरके किं फलं भवतीति[4] भगवन्निन्द्र अस्माकमाचक्ष्वेति प्रश्नार्थः । व्यापकस्याप्यात्मनस्तत्कृतमव्यापकत्वमत्यल्पत्वं कुत्सितत्वं वा द्योतयितुं कप्रत्ययः ।

अत्रोत्तरम्

तस्य हृन्नाभ्युरःकण्ठ-[5]
पृष्ठदेशेषु धारणात् ॥ ४५ ॥
जयः प्रणयनादीनां
वृत्तीनां योगिनो भवेत् ।

---

१ 'साधारणं' क. । २ 'वा' क. । ३ 'पवनवृत्तीनां' ख. । ४ 'फलिष्यति' क. । ५ 'हृत्कण्ठनाभ्यङ्ग' क. ।

तस्य प्रागुक्तस्य प्राणादिरूपतया स्थितस्य वायोर्हृदादिषु पृष्ठान्तेषु पञ्चसु स्थानेषु रोधात् प्रणयनाद्यानां प्राणादिवृत्तीनां जयो भवति योगिनः॥

स तु योगी

जितप्रणयनो धत्ते
स्वेच्छया देहमात्मनः॥ ४६॥
जितापनयनोऽश्नाति
शकृदादि जहाति न।
विजितोन्नयनोऽभ्येति
वाग्वशित्वादिकान् गुणान्॥४७॥
समानवृत्तिविजया-
द्भवेत्त्यक्तजरो वशी।
वपुर्विहारवशिता
भवेद्विनमने चिते॥ ४८॥
पङ्काम्बुकण्ठकासङ्गो
वीर्यमक्षयमद्भुतम्।

जिता प्रणयनाख्या प्राणवृत्तिर्येन स एवंविधो योगी यावद्रुचि स्वेच्छया स्वदेहं धारयति।

'वृत्तिः प्रणयनं नाम यत्तज्जीवनमुच्यते ।'

इति प्रणयनस्य जीवनरूपत्वेनोक्तत्वात् । जिता त्वपनयनाख्या अपानवृत्तिर्येन स तादृग्विधो योगी अश्नन्नपि निर्मलदेहो भवति, अपानजयाद्धि विण्मूत्रादिमलभावेन नास्य पानाशनादि परिणमति अपि तु रसधातुभावेनैव, अतः शकृदादिमलोज्झित एवैष संपद्यते । सर्वदेहिनां हि रसमलधातुभावेनान्नपानपरिणतिर्भवति । विजिता चोन्नयनाख्योदानवृत्तिर्येनासौ अलौकिककवित्ववक्तृत्वरूपवाक्स्वातन्त्र्यप्रभृतीन् गुणान् प्राप्नोति । येन तु समानवृत्तिर्विजिता स सर्वदा जरावर्जितः सर्वंसहस्ववशदेहो भवति । विनमनाख्ये च व्यानवृत्तिव्यापारे कृतजयः स्वेच्छया वपुषि विहरति, ब्रह्मरन्ध्रेण श्रवणच्छिद्रादिना वा मरुत्प्रेरणाकर्षणादौ शक्तः स्यादित्यर्थः । तथा कर्दमजलकण्टकाद्युपविष्टस्यापि तैरसंपर्कोऽनाश्रयरूपः, अविनश्वरं चास्य बलं संजायते ॥

एवमानुषङ्गिकप्रश्नप्रतिवचनादनन्तरं प्रकृतमभिधीयते

धारणा द्वादश ध्यानं
दिव्यालोकप्रवृत्तिदम् ॥ ४९ ॥
समाधिरणिमादीनां
द्वादशैतानि कारणम् ।

द्वादशभिः सगर्भैः कुम्भकैर्धारणा पूर्वमुक्ता। ताश्च द्वादश ध्यानं ज्ञेयम् । तच्च दिव्यामलौकिकीमालोकप्रवृत्तिं प्रकाशाविर्भूतिं ददातीति दिव्यालोकप्रवृत्तिदमिति तदभ्यासस्य फलमुक्तम् । एतानि च द्वादश ध्यानानि समाधिरित्युच्यते। स तु अणिमादिदिव्यसिद्धिकारणम्। अभ्यस्तैवंविधसमाधेरणिमाद्याविर्भावः स्यात् ॥

प्राणायामं विनाप्येवं
वश्यात्मा चेतसि स्थितः ॥५०॥
समभ्यस्यन्नवाप्नोति
गुणानुक्ताननन्तरम् ।

एवमनेन प्रकारेण आत्मनि नित्ययुक्ततया वश्यात्मा योगी विनापि प्राणायामेन क्वचिदपि देशे कृतनिरोधायां चित्तवृत्तौ स्थित एव

तदभ्यस्यन् स आनन्तर्येण एतानुक्तान् गुणान् अणिमादीन् लभते ॥

किं च

यद्यद्वस्तु यथोद्दिष्ट-
क्रमयोगात् प्रपद्यते ॥ ५१ ॥
तत्र तत्रास्य चिद्व्यक्ति-
स्तद्व्याप्तिविषया भवेत् ।
इति बाह्ये स्थिते सर्व-
माकलय्य[1] स्वचक्षुषा ॥ ५२ ॥
सर्वान् पदार्थान् संत्यज्य
शिवतत्त्वं समभ्यसेत् ।

यथोक्तक्रमाभ्यासाद्यद्यत्पृथिव्यादि शिवान्तं तत्त्वं प्रतिपद्यते धारणादिना स्वात्मीकरोति तत्र तत्रास्य योगिनस्तद्व्याप्तिविषया स्वसंविद्व्यक्तिर्भवति । तथाहि—आदौ पृथिव्यादितत्त्वानां शिवमन्त्रमहेश्वरमन्त्रेश्वरमन्त्रविज्ञानाकलप्रलयाकलसकलैः सप्तभिः शक्तिमद्भि-

---

१ 'कलय्यैव चक्षुषा' क. 'कल्प्यैवं स्व' ख. ।

रेतावतीभिरेवैतच्छक्तिभिः स्वरूपेण पृथिव्यादीनां सहैकैकस्य पञ्चदशप्रकारतया जाग्रदादि[1]भेदेन पिण्डस्थादिरूपतया च यावती व्याप्तिः। यथोक्तं श्रीमन्मालिनीतन्त्रे

'शक्तिमच्छक्तिभेदेन धरातत्त्वं विभिद्यते ।
स्वरूपसहितं तच्च विज्ञेयं दशपञ्च च ॥
शिवादिसकलात्मानः शक्तिमन्तः प्रकीर्तिताः ।
तच्छक्तयश्च विज्ञेयास्तद्वदेव विचक्षणैः ॥
एवं जलादिमूलान्तं तत्त्वव्रातमिदं महत् ।
पृथग्भेदैरिमैर्भिन्नम्···············॥'

इत्यादि । तदेवं तावद्व्याप्तिकस्य योगिनः संवित् तावतीत्येवं श्रीमत्कामिकतन्त्रे श्रुतम् । यद्वाद्यं तस्मिन् स्थिते सर्वं वस्तु स्वदृग्गोचरतां प्राप्तं बुध्वा शिवव्यतिरिक्तान् सर्वानेव तान् पदार्थान् सर्वाध्वपर्यन्तवर्तिशिवपदप्राप्तिहेतुत्वात् विद्याप्रभृतींस्त्यक्त्वा शिवतत्त्वमभ्यस्येत् तदेकनिष्ठः स्यात् । 'हेयान् पदार्थान्संत्यज्य' इति पाठे स्पष्ट एवार्थः ॥

शिवगर्भान्समातिष्ठन्
प्राणायामादिकानपि ॥ ५३ ॥

---

१ 'जाग्रदादिशिवभेदेन' क.

जहाति जन्तुर्यः प्राणान्
स शिवत्वं प्रपद्यते ।

आस्तां तावद्व्याधिविषया चिच्छक्तिर्वक्ष्यमाणोत्क्रान्तिविधिं विनापि परमेश्वरध्यानजपगर्भान् प्राणायामान् कुर्वन् यो जन्तुः प्राणांस्त्यजति स शिवतामेति अपवृज्यते इत्यर्थः ॥

अथात्र मुनिः प्रश्नयति

रूपं परं महेशस्य
ध्यातुं शक्यं न जातुचित् ॥५४॥
वैचित्र्यात्कल्पितं भ्रान्त्यै
तत्रास्था चेतसः कथम् ।

किल निष्कलस्वरूपस्य तावद्भगवतः स्वरूपं निराकारत्वे सति नीरूपत्वात् ध्यातुं न शक्यम् ।

यदाहुः

'आकारवांस्त्वं नियमादुपास्यो
न वस्त्वनाकारमुपैति बुद्धिः ।'

इति । अथास्य परमार्थतो रूपासंभवेऽपि ध्यायिनां चित्तवृत्तिनिबन्धनभूताकारविशेषकल्प-

ना, तर्ह्येतत्कल्पितं रूपं श्वेतपीतरक्तादिवैचित्र्यात् भ्रान्त्यै स्यात् । कथं तत्र चेतस आस्था स्थितिः । कल्पितत्वेनासत्यरूपविषये स्वभावचञ्चलस्य चेतसः कथं नियमनमिति प्रश्नः ॥

अथात्र समाधिः

पार्थिवाप्ये विचित्राङ्के
न ध्येये धारणे तदा ॥ ५५ ॥
तथाप्यभ्यासतः सिद्धाः
श्रूयन्ते योगिनस्तयोः ।

सत्यम्, अरूपस्य भगवतः स्वरूपमुक्तेन क्रमेण ध्यातुमशक्यम् । तत्र तु निरालम्बनोपदेशक्रमेण तत्स्वरूपावाप्तिर्भविष्यति । यत्तु 'वैचित्र्यात्कल्पितं भ्रान्त्यै' इत्युक्तं न तावद्युक्तम्, आगमोपदिष्टस्य ध्यानस्य परमार्थत्वेन काल्पिकत्वानुपपत्तेः, तदुपदिष्टतत्तद्विविधविध्यनुष्ठानस्य काल्पिकत्वाभ्युपगमे सति दीक्षादेरप्यसत्यत्वादानर्थक्यमिति कृतमागमेन । किं च वैचित्र्याद्ध्येयं प्रति ध्यानमशक्यमिति यदु-

---

१ 'तस्यैत' क०

च्यते तदास्तां तावत्, परमेश्वराकृतिचिन्तनमय्यावपि एते सुस्पष्टपार्थिववारुण्याख्ये द्वे धारणे सकलसामान्ययोगशास्त्रप्रसिद्धे, ते अपि विचित्ररूपवज्राङ्कितत्वात् सितसलिलोत्पललाञ्छितत्वाच्च न ध्येये ध्यातुं न शक्ये। न चैवात्राभ्युपगमो युक्तः, यतस्तयोः पार्थिवाप्ययोः धारणयोस्तथा तथा रूपवैचित्र्ये सत्यपि साभ्यासानां योगिनामनेकाः सिद्धयः श्रूयन्ते ॥

तथैवमागमोपदिष्टस्य धारणाफलस्यानेकशः[1] साभ्यासयोगिलब्धस्यापि येयं प्रतीतिः तस्यां सत्यामपि

भोगविप्लुतचित्तस्य
कथं स्याच्चित्तसंस्थितिः ॥५६॥
नाधिकृत्याविरक्ताणून्
प्राहेदं साधनं हरः ।

अथोच्यते जन्मसहस्र[2]सात्मीकृतविविधभोगाभ्यासविक्षिप्तचेतसां कथमतिचञ्चलस्य चे-

---

१ 'कशास्त्राभ्या' क. । २ 'स्वाङ्गीकृत' क. ।

तसः संस्थितिः सम्यक् निरुद्धसकलवृत्तित्वे-
नावस्थानं स्यात् । यथोक्तं

'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥'

तथा

'अपि चण्डानिलोद्धूततरङ्गस्य महोदधेः ।
शक्यते प्रसरो रोद्धुं विषयेभ्यो न चेतसः ॥'

इति । नैतद्युक्तम्, यतो नेदं योगाख्यं साधनम-
विरक्तान् जन्तून् अधिकृत्य परमेश्वर आदि-
देश अपि तु प्रचुरवैराग्यनिर्झरनिर्धूतभवभो-
गस्पृहाकलङ्काः केऽप्येव सुचिरं संजातनिः-
सारसंसारभोगविजुगुप्साः पात्रमत्रेति । न चा-
भ्यासवतां किमपि दुष्प्रापं दृष्टेऽपि संभवति ॥

अतश्च

शक्यते विषयीकर्तुं
जगदप्यखिलं शनैः ॥५७॥
किमु चित्रं वपुर्दान्तै-
र्वैराग्याभ्यासशालिभिः ।

वैराग्येण नैःस्पृह्येणाभ्यासेन च पुनःपुन-

स्तदासेवनात्मकेन शालन्ते शोभन्ते इति वैराग्याभ्यासशालिनः दान्ताश्चोपशमयुक्ताः। एवंविधैर्योगिभिः शनैर्शनैर्निखिलमपि जगत् धारणाव्यातिक्रमेण गोचरीकर्तुं शक्यते, किं पुनर्ध्येयं चित्रं पारमेश्वरं वपुरिति॥

एवं सालम्बनं योगमुपदिश्य प्रकृष्टमनालम्बनमुपदेष्टुं भूमिकां विरचयति।

केयं वा रूपकेयत्ता
सर्वाधिष्ठानयोगिनः॥५८॥
सर्वदा सर्वभूतानां
सर्वाकारोपकारिणः।
स्थानरूपप्रमाणानि
परिकल्प्य स्वचेतसा॥५९॥
यत्रोपरमते चित्तं
तत्तद्ध्येयं पुनः पुनः।

यद्वा सर्वाधिष्ठानयोगिनः परमेश्वरस्येयमेव श्वेतादिवर्णा दशभुजा पञ्चवक्राद्याकृतिर्ध्यातव्या इति कोऽयमेवंविधं रूपं प्रति नियमो

न कंश्चिदित्यर्थः । विततवैभवविजृम्भावतः परिमितरूपाकृतिस्थानोपासनमसमीचीनमेव किल भगवतः । अतश्च बहिरन्तर्वाविचलित-चेतसा स्थानरूपप्रमाणाकृत्यादि परिकल्प्य यत्र यत्र भावशरीरे भूतशरीरे वा चित्तमुपशाम्यति तत्र तत्र भूयोभूयः प्रयत्नवता गुरूपदेशसम-धिगतयुक्तिना ध्यातव्यम् । उक्तं च पारमेश्वरे

'नेन्द्रियाणि न च प्राणा न मनो धिषणेषणा ।
नाहमसि न चान्योऽसि चित्तस्य प्रलयस्ततः ॥
चित्तक्षयः परावाप्तिरिति सत्यं गणाम्बिके ।'

इति ॥

अथास्यैव फलमाह

तेनास्य चेतसः स्थैर्यं
सविशेषगुणं शनैः ॥ ६० ॥
उन्मील्य योगसंस्कारं
हतविघ्नस्य जायते ।

'तत्रास्था चेतसः कथम्' इति यत् प्राक् पर्य-नुयुक्तं तदर्थमिदम् । तेनामुना प्रागुक्तेन योगे-नास्य योगिनो निर्विघ्नस्य च सतः चेतसः स्थैर्य-

मचाञ्चल्यं परस्वरूपविश्रान्तेरतिविलक्षणं जायते। कीदृशं तत्स्थैर्यमित्याह—सविशेषगुणं सविशेषाः सातिशया गुणाः प्रागुक्ता अणिमादयो यत्र तत्तथा। किं कृत्वैतत्तु उत्पद्यते इत्याह—शनैर्योगसंस्कारमुन्मील्य क्रमेण योगसंस्कारं तल्लयरूपं प्रकाश्य तद्वासनाधिष्ठितत्वात् तद्व्यवहारावस्थितस्यास्य निर्विघ्नस्य सततस्तत्रैव चित्तस्थैर्यं जायते इत्यर्थः॥

एवमातिष्ठतः सम्य-
ग्विनैवाकारकल्पनाम्॥ ६१॥
अकिञ्चिच्चिन्तकस्यास्य
रूपमुन्मीलति स्वकम्।
सर्वार्थदृक्क्रियारूप-
मानन्दमयमव्ययम्॥ ६२॥
यत्प्राप्य न पुनर्दुःख-
योगमेत्यशिवावहम्।

एवमेनं प्रागुक्तं योगविधिं सम्यक् शुद्धाभ्यासातिशयवशेनाकारकल्पनां विनाप्यनुति-

ष्टतो योगिनोऽकिंचिच्चिन्तकस्य किंचिदप्यचिन्तयतश्चित्तक्षयात् स्वात्मन्येव निस्तरङ्गमहोदधिप्रशान्तेऽवस्थितस्य स्वकं निजं रूपमुन्मीलति विकसति अपरिमितं संपद्यते, प्रसरन्निरावरणनिजस्वरूपो भवति इत्यर्थः। कीदृक् स्वकं रूपमुन्मीलतीत्याह—सर्वार्थदृक्क्रियारूपमित्यादि, सर्वार्था सर्वविषया दृक् ज्ञानं क्रिया च व्यापाररूपा ते एव रूपं यस्य। यतः

'ज्ञानक्रिये शिवे प्रोक्ते सर्वार्थे निर्मले परे।'

इति यच्छिवरूपमागमेषूपदिष्टं तदानन्दमयमनुरूपमाह्लादसुन्दरमव्ययं चाविनश्वरमस्य योगिन एवमभ्यस्यतोऽभिव्यज्यते। यत्प्राप्तेर्जन्ममरणादि अशिवमश्रेय आवहतीत्यशिवावहं संसारलक्षणं दुःखयोगं नैति न प्राप्नोति। उक्तं च श्रीमदवधूतगुरुणा

'यथा नीता रसेन्द्रेण धातवः शातकुम्भताम्।
पुनरावृत्तये न स्युस्तद्वत्तन्मतचोदिताः॥'

इति॥

अत्र स्वरूपप्रशंसापूर्वमतिरहस्यतया सर्वान् प्रति अप्रकाश्यत्वमभिधातुमाह

एतत्समस्तगुह्यानां
गुह्यं सिद्धामरस्तुतम् ॥ ६३ ॥
साक्षादालोचनं शम्भो-
रत्युत्पावनमुत्तमम् ।
नाल्पकालोषितायैत-
द्देयं नातिप्रमादिने ॥ ६४ ॥
नामेधिने नातपसे
यश्च नाभ्यर्चयेच्छिवम् ॥

यत एतत्सर्वेषां रहस्यानामप्यतिशयेन गूह-नीयं निरतिशयनिःश्रेयसावाप्तिहेतुत्वात्, अत एव च सिद्धैरमरैश्चाभिष्टुतम् । साक्षात् परमेश्वरस्य तेजसः प्रकाशकत्वादत्युत्कृष्टं पावनं पवित्रताहेतुः तस्मादेतन्नाल्पकालोषितायान-तिचिरोपसन्नत्वात् अविज्ञातनिरतिशयश्रद्धा-भक्तियोगाय शिष्याय, नातिप्रमादिने सप्रमा-दाय न चाल्पप्रज्ञायानयोरुभयोरपि[1] रक्षितु-मशक्यत्वात् । नाप्यतपसे नियमविरहिताय । न च यः परमेश्वरार्चनं न करोति । एतयोर-

[1] 'ज्ञानयोगयोरपि' ।

प्रमादित्वाजडत्वे सत्यपि तपोविरहात् भक्त्य-
योगतश्चानधिकृतत्वात् ॥

तदेवमस्यापि योगविधेर्भुक्तिमुक्तिलक्षणं फलमवगन्तव्यमित्येतदुपसंहाराय पुरस्ताद्-
भिधास्यमानचर्यापादोपक्षेपाय चायं श्लोकः

अस्याभ्यासाद्दिव्यसिद्ध्यंशुजालै-
रिष्टान् लोकान् रोरुचानो विहृत्य ।
काले हित्वापास्रवं देहमास्ते
स्वात्मन्येवाश्चर्यचर्याधिवासः ॥

अस्यैवंविधस्य निरालम्बनस्य योगस्याभ्यासः पुनःपुनःसेवनं तस्माद्दिव्या अलौकिक्यश्चतुः-
षष्टिगुणा अणिमादिसिद्धयो येषां ते दिव्य-
सिद्धयः अंशुजालाः शक्तिप्रसराः तैः, रोरुचानो विततेजःपुञ्जत्वात् देदीप्यमानः सन् अभि-
मतान् लोकान् यथेच्छं विहृत्य इति तेषु स्वर्गादिलोकेषु विहरणं क्रीडालक्षणं निर्वर्त्य,
अपगतानि बाह्यविषयैकग्रहणप्रवणानि अन्त-
रात्मोपलम्भपराङ्मुखानि आस्रवन्ति बहिः सा-
तत्येन गच्छन्तीति आस्रवशब्दवाच्यानीन्द्रि-

याणि यस्मात् तमपास्त्रवं परिहृतबहिर्वृत्तित्वेन सर्वदान्तर्मुखसमग्रेन्द्रियग्रामं, दिव्यमपि देहं यथाभिमते कस्मिंश्चिदपि काले हित्वा संत्यज्य, स्वस्वरूप एवास्ते, निर्वृतो भवतीत्यर्थः। कीदृशः सन्नित्याह—आश्चर्यचर्याधिवास इति, आश्चर्यप्रधाना सा आश्चर्यचर्या अत्यद्भुतत्वादप्रमेयं स्थित्यादिपञ्चविधकृत्यकर्तृत्वं तस्या अधिवासः उपाश्रयः। परमेश्वरवदिच्छामात्रसंपाद्ये पञ्चविधे स्थित्यादौ व्यापारे शक्तोऽपि स्वात्मन्येवास्ते करणीयस्याभावात्—इत्येतद्विवेचितप्रायं विद्यापाद एवेति शिवम् ॥

संक्षिप्तोक्तिः स्फुरति विततं स्फारयन्ती प्रमेयं
पौर्वापर्यक्रमविमृशनात्पौनरुक्त्यं न किंचित् ।
नातिव्याप्तिः प्रकृतकथनान्नैव चाव्याप्तिरित्थं
योगः साङ्गो जयति गदितः श्रीमृगेन्द्रागमेऽस्मिन् ॥

---

इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां
मृगेन्द्रवृत्तौ योगपादप्रकरणम् ॥

**समाप्तश्चायं**

योगपादस्तृतीयः ॥